KÂVYAMÂLÂ. 16.



THE

# MUKUNDÂNANDA BHÂṆA

OF

## KÂS'ÎPATI.



EDITED BY

PAṆDIT DURGÂPRASÂDA

AND

KÂS'ÎNÂTH PÂṆDURANG PARAB.

REVISED BY

WÂSUDEV LAXMAṆ SHÂSTRÎ PAṆS'ÎKAR.

Third Revised Edition.

PUBLISHED

BY

PÂNDURANG JÂWAJÎ,

PROPRIETOR OF THE "NIRṆAYA-SÂGAR" PRESS,

BOMBAY.

1926.

*Price 8 Annas.*

काव्यमाला. ९६.

श्रीकाशीपतिविरचितः

# मुकुन्दानन्दभाणः ।

जयपुरमहाराजाश्रितेन पण्डितव्रजलालसूनुना महामहोपाध्याय-
पण्डितदुर्गाप्रसादेन, मुम्बापुरवासिना परबोपाह्व-
पाण्डुरङ्गात्मजकाशिनाथशर्मणा च संशोधितः,
सच पणशीकरोपाह्वलक्ष्मणशर्मात्मज-
वासुदेवशर्मणा च संस्कृतः ।

तृतीयं संस्करणम् ।

स च
मुम्बय्या
पाण्डुरङ्ग जावजी
इत्येतैः स्वीये निर्णयसागराख्ययन्त्रालये मुद्रयित्वा प्रकाशितः ।

१९२६.

मूल्यं ८ आणकाः

# काव्यमाला ।

## [1]श्रीकाशीपतिकविप्रणीतो
## [2]मुकुन्दानन्दभाणः ।

[3]वन्दे वन्दारुमन्दारमिन्दुभूषणनन्दनम् ।
अमन्दानन्दसंदोहबन्धुरं सिन्धुराननम् ॥ १ ॥

कण्ठालिङ्गनमङ्गलं घनकुचाभोगोपभोगोत्सवं
श्रोणीसंगमसौभगं च सततं मत्प्रेयसीनां पुरः ।
प्राप्तः कोऽयमितीर्ष्ययेव यमुनाकूले बलाद्यः स्वयं
गोपीनामहरद्दुकूलनिचयं कृष्णः स पुष्णातु [4]नः ॥ २ ॥

[5]अपि च ।

चन्द्रे शीतलयत्यलीकनयनं शंभोः सुधाशीकरै-
र्विष्वग्व्याकुलयत्सु संयमधनान्कान्तादृगन्तेषु च ।
लीलायै परमैक्षवं धनुरिषून्बिभ्रत्प्रसूनात्मनः
स्वच्छन्दं रतिवल्लभो विजयते त्रैलोक्यवीरः स्मरः ॥ ३ ॥

(नान्द्यन्ते)

**सूत्रधारः**—(पुरोऽवलोक्य । सप्रमोदम् ।) अद्य खलु फलितर्[6]मामूलचूडमस्मदीयपुरातन[7]पुण्यकल्पलताभिः । यतः, इत एव नूतनपुरपरिसरालंकारभद्र-

१. कवेर्देशकालौ न ज्ञायेते. भाति चायं कश्चन द्रविडः, नातिप्राचीनश्च. २. एतद्भाणमुद्रणावसरे पुस्तकत्रयमस्माभिरधिगतम्. तत्र प्रथमं पुण्यपत्तने 'काव्येतिहाससंग्रह'-नाम्नि मासिकपत्रे मुद्रितं **क**-संज्ञकम्, द्वितीयं जयपुरराजगुरुभट्टलक्ष्मीदत्तसूनुश्रीदत्तभट्टानां संग्रहात्प्राप्तं १८५३ मिते विक्रमाब्दे काश्यां लिखितं **ख**-संज्ञकम्, तृतीयमपि तेषामेवासमाप्तमशुद्धं च **ग**-संज्ञकम्. ३. **क**-पुस्तके प्रारम्भे 'वन्दामहे महेशानचण्डकोदण्डखण्डनम् । जानकीहृदयानन्दचन्दनं रघुनन्दनम् ॥' अयं श्लोकोऽधिकोऽस्ति. ४. 'वः' **ख**. ५. 'अपि च' **क**-पुस्तके नास्ति. ६. 'तरुमूलचूडं' **ख**. ७. 'पुण्य' **ख**-**ग**-पुस्तकयोर्नास्ति. ८. 'परिषदा' **ख**; 'परिसदा' **ग**.

गिरिचूडामणेर्भगवतश्चूडेश्वरस्य वसन्तोत्सवदर्शनसमुत्सुकाः सामाजिकाः कल्याणमण्डपमध्यासते । तदेनानुपसृत्य चिरपरिचितलास्यकलाविलोकनाय सविनयमभ्यर्थये । (पदान्तरं गत्वा सप्रश्रयमञ्जलिं बद्ध्वा ।) भो भोः सकलकलाविदः सभासदः, एष भरताचार्यपुत्रः कलाप्रवीणो निजविद्याप्रदर्शनायात्रभवतामनुग्रहमाकाङ्क्षते । (आकाशे । कर्णं दत्त्वा ।) किं ब्रूथ— 'साधु भरताचार्यपुत्र, साधु । वयमपि चिरात्कस्यापि सरसकवेः सूक्तिमुक्तामणिग्रथितमभिनवं मिश्रभाणमवलोकयितुमुत्कण्ठिताः । तदधुना तादृशमेव कमपि भाणमभिनीय दर्शयतु भवान्' इति । अनुगृहीतोऽस्मि । (आत्मगतम् ।) अधुना विरलः खलु मिश्रभाणप्रचारः । विरलाश्च तथाविधाः कवयः । अयं गरीयान्खलु सामाजिकानामादेशः । तत्कथमिदमशक्यसंघटनमापतितम् । (स्मरणमभिनीय ।) अहो, मया प्रणयकुपितगृहिणीमनोविनोदव्यासक्तचित्तेन विस्मृतमपि सामाजिकानुग्रहेण पुनरनतिचिराभ्यस्तमिव तादृशमेव रूपकं स्मर्यते । भवतु तावत् । गृहिणीमेवाहूय कथयामि । (प्रकाशम् ।) आर्ये, इतस्तावत् ।

(प्रविश्य ।)

**नटी**—एसह्मि । को णिओओ आणवेदु अज्जो । (क)

**सूत्रधारः**—आर्ये,

कौण्डिन्यवंशरत्नस्य कवेः काशीपतेः कृतिः ।
मुकुन्दानन्दनामायं मिश्रभाणः प्रयुज्यते ॥ ४ ॥

तदत्र—(इत्यर्धोक्ते ।)

(क) एषास्मि । को नियोग आज्ञापयत्वार्यः

१. 'तत्रभवतां' **ख-ग.** २. 'कस्यापि चिरात्' **ख-ग.** ३. 'तदद्य तादृशमपि' **क.** ४. 'सूत्रधारः—अनु–' **ख.** ५. 'संघट्टनं' **ख-ग.** ६. 'विस्मृततमं' **ख**; 'विस्मृततमः' **ग.** ७. 'पुतरपि' **ख-ग.** ८. 'एव' **ख-ग.** ९. 'आणवेदु अज्जो' **ख-ग-**पुस्तकयोर्नास्ति. १०. 'गोत्ररत्नस्य' **ख.**

**नटी**—अज्ज, अच्चरिअं अच्चरिअं ।

तक्के कक्कसवक्कोत्तिणिट्ठुरा तस्स भारई ।
जादा महुरसंदब्भे कव्वम्मि मिउला कहम् ॥ ५ ॥ (क)

**सूत्रधारः**—(सपरिहासम् ।) त्वमेव तावत्कथय ।

क्षणं प्रणयकोपे त्वं निष्ठुरापि कथं पुनः ।
प्रेमार्द्रहृदया जाता मृदुलप्रकृतिः प्रिये ॥ ६ ॥

**नटी**—एक्कावि भारई कहं कक्कसा मिउला एत्ति पुच्छिदे किं अण्णं कहेहि अज्जो ।(ख)

**सूत्रधारः**—कोऽत्र विरोधः । उक्तं चैतेनैव कविना—

तर्के[1] कर्कशवक्रवाक्यगहने या निष्ठुरा भारती
सा काव्ये मृदुलोक्तिसारसुरभौ[3] स्यादेव मे कोमला ।
या प्रायः प्रियविप्रयुक्तवनिताहृत्कर्तने[4] कर्तरी
प्रेयोलालितयौवते[5] न मृदुला सा किं प्रसूनावलिः ॥ ७ ॥

**नटी**—कुसुमसिरीविअ मिउला[6] से कईणो भारई । (ग)

**सूत्रधारः**—किमुच्यते कुसुमश्रीरिवेति ।

व्याकोचप्रसवश्रियोऽपि मृदुला वाचामियं प्रक्रिया
मन्दस्यन्दिमरन्दतोऽपि मधुरस्तत्रायमर्थक्रमः ।
सौरभ्यादपि संमतं[7] पुनरिह व्यङ्ग्यं पिकेभ्योऽप्यमी
मद्वर्ग्या मधुरस्वराः कविरयं श्लाघ्यो वसन्तादपि ॥ ८ ॥

---

(क) आर्य, आश्चर्यमाश्चर्यम् ।
तर्के कर्कशवक्रोक्तिनिष्ठुरा तस्य भारती ।
जाता मधुरसंदर्भे काव्येऽपि मृदुला कथम् ॥

(ख) एकापि भारती कथं कर्कशा मृदुला चेति पृष्टे किमन्यत्कथयत्यार्यः ।

(ग) कुसुमश्रीरिव मृदुलास्य कवेर्भारती ।

---

१. 'कर्कशा' **ख.** २. 'चैतेन' **ख**; 'चैवैतेन' **ग.** ३. 'मधुरोक्ति' **ख-ग.** ४. 'कृन्तने' **क.** ५. 'यौवने' **क-ग.** ६. 'मिउला' **ख-ग**-पुस्तकयोर्नास्ति. ७. 'संगतं' **ख-ग.** ८. 'काव्येऽस्मिन्' **ख-ग.**

**नटी**—(सर्वतो[1]ऽवलोक्य ।) अज्ज[2], एदं चूदवणं कहेहि वसन्दा[3]अमणम् । ईदो[4] पेक्ख पेक्ख ।

किसलयकरसंपुडेण वल्ली किरइ[5] पुरो कुसुमञ्जलिं णडन्ती ।
पवणणिहदतालपत्ततालद्[6]धणिमणुगाअइ [7]बंम्भरावलीआ ॥ ९ ॥ (क)

**सूत्रधारः**—आर्ये, साधु निरूपितम् । इतोऽपि

मन्दानिलेरितमनोहरपल्लवाग्रै-
र्माकन्दवीरुदियमाह्वयतीव रागात् ।
प्रत्युत्तरं परभृतोऽपि दिशन्निवास्य
कूजन्कुहूरिति समेति सपक्षपातम् ॥ १० ॥

इतोऽपि पुनः

श्रेणीभूय मदालसा मधुकराः पुष्णन्ति वेणीश्रियं
प्राञ्चद्गुच्छभरोऽप्युरोजकलशप्रागल्भ्यमालम्बते ।
रागोल्लासि च पल्लवं कलयते रम्याधरप्रक्रियां
वासन्तीलतिकापि तेन वहते वामालकाविभ्रमम् ॥ ११ ॥

(विमृश्य ।) आर्ये, सर्वमपि सुघटितमसद्भाग्यवशात् । यतः ।

कालः कोकिलकोमलोक्तिमधुरः काव्यज्ञमान्यः कविः
काव्यस्यापि स एव कामजनको राधाविटो नायकः ।
सारज्ञाश्च सभासदः पुनरमी नाट्ये प्रवीणा वयं
किं चायं समुदञ्चितो भगवतश्चूडेश्वरस्योत्सवः ॥ १२ ॥

तदत्र संगीतकमनुतिष्ठतु भवती ।

(क) आर्य, इदं चूतवनं कथयति वसन्तागमनम् । इतः पश्य पश्य ।
किसलयकरसंपुटेन वल्ली किरति[9] पुरः कुसुमाञ्जलिं नटन्ती ।
पवननिहततालपत्रतालध्वनिमनुगायति [10]बंम्भरावलीका ॥

---

१. 'सर्वतोऽवलोक्य' क-पुस्तके नास्ति. २. 'अज्ज' ख-ग-पुस्तकयोर्नास्ति. ३. 'गमणं' ख. ४. 'इदो पेक्ख इदो पेक्ख' क. ५. 'रमइ' ख-ग. ६. 'ज्झणि' ख-ग. ७. 'बम्भरावलिः' ख-ग. ८. 'इहमन्त्रयतीव' ख. ९. 'रमयति' ख. १०. 'बम्भरावलिः' ख-ग.

नटी—

पल्लइदचूदलदिअं कोइलतरुणा[1] रमन्दि रमणिज्जम् ।

उज्झन्दोवि मुहुत्तं काअउलक्कूरणिस्सणं सुणिअ ॥ १३ ॥ (क)

**सूत्रधारः**—(सशिरःकम्पम् ।) अहो [2]संगीतमाधुर्यम् ।

(नेपथ्ये ।)

प्राप्य प्रबोधमधुना [3]रटतीव नाथो

हा हा हतास्मि [4]विधिनेति विनिन्द्य दैवम् ।

निःश्वस्य मत्करधृतं निजमम्बरान्त-

माकृष्य हन्त चलितैव कथं प्रिया मे ॥ १४ ॥

**सूत्रधारः**—(श्रुत्वा नेपथ्याभिमुखमवलोक्य ।) अयं किल मञ्जरीवियुक्तस्य [5]मन्दारोद्यानगतस्य भुजंगशेखरस्य भगवतो मुकुन्दस्य भूमिकामादाय इत एवाभिवर्तते मातुलपुत्रो मधुकरः । तदावामप्यनन्तरकरणीयाय सज्जीभवावः ।

(इति निष्क्रान्तौ ।)

## प्रस्तावना ।

(ततः प्रविशति यथानिर्दिष्टो भुजंगशेखरः ।)

**भुजंगशेखरः**—('प्राप्य प्रबोधम्-' इति पठित्वा । विमृश्य ।) तदानीमेवाहं तस्याः

स्फुटवनपुलककदम्बं स्पष्ट्वा कुचकलशयुगलमविलम्बम् ।

मधुमधुराधरबिम्बं मदवत्याः किमिति मङ्क्षु नाचुम्बम् ॥ १५ ॥

---

(क) पल्लवितचूत[6]लतिकां कोकिलतरुणा [7]रमन्ते रमणीयाम् ।

[8]उज्झन्तोऽपि मुहूर्तं काककुलक्रूरनिस्वनं श्रुत्वा ॥

---

१. 'तरुणो रमइ' ख-ग. २. 'संगीतस्य' क. ३. 'नटतीव' ख. ४. 'विधिनैव' ग. ५. 'मन्दारमसदनोद्यान' ख-ग. ६. 'लतायां' क. ७. 'रमन्ति' क; 'रमति' ख-ग. ९. 'उज्झन्नपि' क-ख.

(पुनर्विमृश्य।) कथमेतावतोऽपि तत्कालेऽवकाशः। यतः।

कुञ्जे कोमलशाद्वले पदमिह द्रागर्पितं वा न वा
किंचिच्चाटु चमत्कृतं च वचनं किं व्याहृतं वा न वा।
साकूतप्रणयं च सामि नयनं व्यापारितं वा न वा
तन्व्या हन्त तदन्तरे विधिवशात्तस्याः प्रबुद्धः पतिः॥ १६॥

इयं च पुनरभागधेयेन मया

उत्सङ्गे विनिवेशयामि पुलकिन्याघ्राय वक्त्राम्बुजं
वक्षोजौ परिरभ्य वारिजदृशश्चुम्बामि बिम्बाधरम्।
जल्पन्त्याः श्रवणे रहः किमपि मे विश्लेषयामि च्छला-
न्नीवीमित्यफलैर्मनोरथशतैर्नीता निशा केवलम्॥ १७॥

अथवा कृतमनया व्यतीतचिन्तया। (निःश्वस्य।) अत्रैवोद्याने पुनरप्येषा

आरुह्योरुयुगं प्रसह्य रभसादुन्नीय नीवीं प्रिया
काञ्चीकिङ्किणिकानिनादचकिता मन्दोच्चलन्मध्यमा।
किंचित्कूजितकंधरा रतिपरिश्रान्ता च दष्टाधरा
कामं मे परिपूरयिष्यति न किं श्वो वा परश्वोऽपि वा॥ १८॥

(क्षणमात्रं विचिन्त्य।) अलमनयाप्यनागतावगाहिन्या वाञ्छावाहिन्या। किंत्वेतावदाशासनीयम्।

आनीलकुन्तलपरिष्कृतमायताक्ष-
मापाटलाधरदलाञ्चितमन्दहासम्।
आपीनतुङ्गकुचमप्रतिमावलग्न-
मङ्गं पुरः स्फुरतु मे पुनरङ्गनायाः॥ १९॥

(स्मृतिमभिनीय।) इदमपि मे दुर्लभं मन्दभाग्यस्य। यतः (आकाशे।) या

पत्युः प्रयासि सदनं मृत्योरिव सपदि भीषणं वदनम्।
सा त्वं प्रिये कथं मे यास्यसि भूयोऽपि नयनयोरयनम्॥ २०॥

१. 'एतावता' ख. २. 'यतः' ख-ग-पुस्तकोर्नास्ति. ३. 'च' ख-ग-पुस्तकयोर्नास्ति. ४. 'कृतं कृतमनया' क. ५. 'व्यतीतगोचरया' ख-ग.

(सास्रम् ।)

लीलापाङ्गतरङ्गितं तव किमप्यालम्ब्य भूयश्चिरा-[1]
देतावत्कुपितं[2] तृणाय यमहं मत्वा सधैर्यं स्थितः ।
तस्यैवाद्य करे त्वया विनिहितो मारस्य निःसंशयं
कान्ते किं नु करोमि को नु शरणं का वा गतिः कथ्यताम् ॥२१॥

(पुनः 'तस्यैव–'इत्यादि पठति ।)

(नेपथ्ये ।)

अयमयमुदयाद्रेर्नातिदूरे विवस्वा-
नयमयममृतांशुः पातकी याति चास्तम् ।
इयमियमुपकण्ठे त्वद्वियोगासहत्वा-
न्निवसति तरुणी ते कोक शोकं विमुञ्च ॥ २२ ॥

(श्रुतिमभिनीय सहर्षम् । नयनयोरस्रमपमृज्य ।) प्रियावियोगविक्लवं गृहदीर्घिकाचक्रवाकं शोकारवमुखरमुखं मन्दंमन्दमाश्वासयता मन्दारेण मञ्जरीवियुक्तोऽप्यहमाश्वासित[3] इवास्मि । (हृदयं प्रति ।) हृदय, धैर्यमाकलय । इयमुपश्रुतिरवश्यं प्रियासमागमं फलिष्यति[4] । (विचिन्त्य ।) अद्यैवाध्यवसितगमनो माधवो मञ्जरीधवः कथमेनामनादाय गच्छति । (सविमर्शम् ।) उपश्रुत्या तु पत्युरेव प्रस्थानं प्रियायाः पुनरिहैवावस्थानं सूचितम् । अतः सर्वथा प्रियासमागमेन[5] भवितव्यम् । (पुनः सोच्छ्वासम् ।) कथमिदमकृतसुकृ[6]तस्यासंभावनीयमेव मम संभावनां गोचरयति ।

उत्ताम्यतोरतिचिरादपि मन्मथाग्ने-
रद्यावयोर्घटनमत्र[7] कथंचिदासीत् ।
तत्रान्तरे पतिरभूत्पुनरन्तरायः
संगृह्यते[8] तदपि हन्त मनोरथो मे ॥ २३ ॥
निर्याति किं न पतिरेष कुतोऽपि हेतो-
र्द्रक्ष्यामि वा किमहमिन्दुमुखीं न भूयः ।

---

१. 'भूयस्तरां' ख-ग. २. 'कुपिते' ख. ३. 'अहमप्याश्वासित' ख-ग. ४. 'संगममाफलिष्यति'.क. ५. 'संगमेन' क. ६. 'पुण्यस्य' ग. ७. 'एव' ग. ८. 'संत्रायते सपदि' ख-ग.

(सगद्गदम्।)

हा हन्त किंतु मदनो दम तावदेव
मर्माणि कृन्तति कृतान्त इवाततायी ॥ २४ ॥

(किंचिद्धैर्यमवलम्ब्य।) पञ्चापि युगपदेवायं मयि

अशोकपद्मोत्पलचूतमल्लिकाशराननङ्गो यदि [1]संदधाति सः।
[2]तथाविधानेतत्समसंख्याकान्
करास्यनेत्राधरहासमार्गणां[3]स्तदा प्रियाया अनुसंदधाम्यहम् ॥ २५ ॥

इति तामेव तामरसलोचनां मनसा गोचरयन्किं करोमि प्रियामे[4]वं चिन्तयन्नपि न पारयामि विरहपारावारम्। यतः, म[5]म सा प्रियतमापि

मन्दस्मितेन मधुराधरपल्लवेन
कुम्भोन्नमत्कुचभरेण कृशोदरेण।
विद्युन्निभाङ्गलतया च विचिन्त्यमाना
चेतो धुनोति [6]च धिनोति च चञ्चलाक्षी ॥ २६ ॥

(किंचिदिव [7]स्मित्वा।) अहो दुःशीलता मदीयहृदयस्य यदिदं तथापि

तत्पादाम्बुरुहं तदूरुयुगलं तादृङ्नितम्बस्थलं
तन्मध्यं स गभीरनाभिवलयस्तावानुरोजक्रमः।
तद्वक्त्रं तदपाङ्गमुग्धवलनं ते नीलनीलालकाः
सा तन्वीति तदङ्गकेषु हृदयं धावन्न विश्राम्यति ॥ २७ ॥

(स्पर्शमभिनीय।) कथमियं प्रभातप्राया रजनी संवृत्ता।

पुरातनपरीमलप्रकरमेदुरा मारुता
न वान्ति मुकुलीभवत्कुमुदगर्भलीना इव।
चरन्ति नवसौरभाः पुनरमी समीराङ्कुराः
सजृम्भणसरोजिनीसरसिजास्यमुक्ता इव ॥ २८ ॥

१. 'संदधानः' **ख-ग.** २. 'तथाविधान्–' इत्यादि **ख-ग**-पुस्तकयोर्नास्ति. ३. 'तथा' **ख-ग.** ४. 'एवं' **क.** ५. 'मम प्रिया दूती' **ख.** 'मामतिप्रिया युवतिः' **ग.** ६. 'चपला मम चञ्चलाक्षि' **ख-ग.** ७ 'स्थित्वा' **ख-ग.**

(प्रतीचीमवलोक्य।) अद्यमिह ५

जरठ इव मरालो जर्जराग्रैर्मयूखैः
स्खलति शिशिरभानुः पश्चिमाम्भोधिपारे ।

(ऊर्ध्वमवलोक्य।) अत्र पुनः

श्लथगरुत इवामूस्तत्र तत्रान्तरिक्षे
विरलविरलभासः किं च तारा लुठन्ति ॥ २९ ॥

कलङ्कदाशो गगनाम्बुराशौ प्रसार्य चन्द्रातपतन्तुजालम् ।
लग्नोडुमीनांल्लघु संजिघृक्षुश्चन्द्रप्लवस्थश्चरमाब्धिमेति ॥ ३० ॥

नभोवनं नक्तमसौ विगाह्य नक्षत्रसेनासहितः शशाङ्कः ।
कराग्रलग्नान्कतिचित्प्रहृत्य पान्थान्प्रभाते प्रपलायतेऽद्य ॥ ३१ ॥

अपि च ।

आलोकैरतिपाटलैरचरमां विस्तारयद्भिर्दिशं
नक्षत्रद्युतिमाक्षिपद्भिरचिरादाशङ्क्य सूर्योदयम् ।
पुञ्जीभूय भयादिवान्धतमसं मन्ये द्विरेफच्छला-
न्मीलन्नीलसरोरुहोदरकुटीकोणान्तरे लीयते ॥ ३२ ॥

तदितो निष्कुटवनाद्बहिरद्यैव गन्तव्यम् । (इत्युत्थाय वनप्राकारमुल्लङ्घ्य वीथीं प्रविश्य हर्म्यालीमवलोक्य च[1] ।)

व्यामिश्रैकैकबाहु प्रवलितपृथुलैकैकचारूरुकाण्डं
दंष्ट्रादष्टाधरोष्ठं दरशिथिलतनुश्लेषमालिङ्ग्य कान्ताः ।
शश्वन्निःश्वासवेगस्फुरितगुरुकुचद्वन्द्वसंघृष्टवक्षाः
श्रान्तः शेते रतान्ते सुखमिह सुकृती लीलया कामिलोकः ॥ ३३ ॥

किं च काश्चन पुनरिहैव

निःशेषं व्यपनीय नीविवसनं मञ्जुक्वणन्मेखलं
क्रीडान्दोलनखिन्नमध्यलतिकं किंचित्प्रकम्पस्तनम् ।

---

१. 'भवन्' क. २. 'च' ख-ग-पुस्तकयोर्नास्ति. ३. 'प्रचलित' ख. ४. 'दष्ट्वा दष्ट्वा' क.

उद्यत्कुण्डलताण्डवं च रुचिरं विक्रम्य[1] कान्तोपरि
　　क्लान्ता वक्षसि कामिनां मुकुलितप्रान्ताक्षिकं[2] शेरते ॥ ३४ ॥

अन्यच्च।

वीरायितेषु[3] मृगशावविलोचनानां
　　कण्ठोदितान्यचरमं कलकूजितानि।
आम्रेडयद्भिरथ सौधगतैः कपोतैः
　　शङ्के गृहीत इव[4] संप्रति शिष्यभावः ॥ ३५ ॥

(पदान्तरं गत्वा।) कोऽयं कमलापीडसदनप्राकारादवतीर्य पर्याय[5]स्खलितचरणस्तरुण[6] इत एवाभिवर्तते। (निपुणं निरूप्य स्वगतम्।) कोऽन्यो वसन्तकादृतेऽस्मन्मित्रादेतादृशे चरित्रे प्रगल्भः। (प्रकाशम्।) सखे, वसन्तक, चिराय शीतलयसि मे लोचने[7]। सत्रासगद्गदं किं ब्रवीषि—'वयस्य[8], मन्दं मन्दं जल्प' इति। सखे, कुतस्ते भयमिदम्। किं ब्रवीषि—'कमलापीडात्' इति। सखे, मा भैषीः। (हस्ते[9] गृहीत्वा।) तिष्ठतु कमलापीडानां शतं सहस्रमयुतं वा।

जिष्णुर्वा विष्णुर्वा स्रष्टालिकदृष्टिरष्टमूर्तिर्वा।
स्प्रष्टुं वा प्रष्टुं वा मत्सखमीष्टेऽपि[10] नान्ततो द्रष्टुम् ॥ ३६ ॥

(कतिचित्पदान्यतिक्रम्य।) कथमद्यापि विकम्पसे। किं ब्रवीषि—

　　'उद्यत्करालकरवालतडित्कराग्र-
　　　　मुद्भ्रान्तभीमतरशोणित[11]शोणदृष्टिम्।
　　उद्दण्डदण्डधरदुर्धरचण्डिमान-
　　　　मुद्वीक्ष्य तं कश्चय हन्त न कम्पते कः ॥ ३७ ॥' इति।

सत्यम्। तथाविध एव कमलापीडः। किंतु दूरप्रवासिनस्तस्यासंभावितमालोकनम्। अथवा स्वप्नविजृम्भितमेतत्प्रियसखस्य भवितव्यम्। किं ब्र-

---

१. 'विश्रम्य कान्ता परिक्लान्ता' **ख-ग.** २. 'प्रान्तेक्षणं शेरते' **ख**; 'प्रान्ताक्षिमंशेरते' **ग.** ३. 'वीरायितेन' **ख.** ४. 'इति' **क-ग.** ५. 'पर्याय' **ख-ग**-पुस्तकयोर्नास्ति. ६. 'चकोरतरुण इवायाति' **ख-ग.** ७. 'नयने' **ख-ग.** ८. 'वयस्य' **क**-पुस्तके नास्ति. 'हस्तं' **ख-ग.** १०. 'वत्सबलिष्ठेऽपि' **ख.** ११. 'शोणितकोण' **क.**

वीषि—'वयस्य, नायं स्वप्नः' इति । कथं तर्हि तव पुनरागमनम् । किं तावत् । अणुमात्रमपि नात्र मया मिथ्या वचः कथ्यते । सत्यं दूरप्रवासीति । अहमपि तथैव दूतीवचनलम्भितविस्रम्भतया तया सममसमशरसंभ्रमसंभृतहृदयो यथापूर्वं तैस्तैर्विलासैर्विलासगृहविद्रुमचरणपर्यङ्कपर्यन्त एव शयानो निःशङ्को निशामनैषम् । अयं तु कमलापीडहतकः प्रच्छन्न एव कदा वागत्य निजकलत्रवृत्तपरिशोधनाय कुत्र वा निलीय स्थित इति नावेदिषम् । ततो निशावसाने निःशङ्कमेव तस्मान्निशान्तान्निर्गतः प्राङ्गणगतं तं घातुकमपश्यम्' इति । वयस्य, कष्टं कष्टम् । कथंपुनर्निष्क्रान्तोऽसि । किं ब्रवीषि—

'स मां दृष्ट्वा हन्तुं करधृतकृपाणः प्रचलितो
बहिर्द्वारं यावत्त्वरितमरुणज्जाल्महतकः ।
अहं दैवात्तावत्कथमपि चलन्निष्कुटपथा-
दुदग्रप्राकारं लघु समतिलङ्घ्यागत इति ॥ ३८ ॥

दिष्ट्या पुनरपि जातं वयस्येन । किं ब्रवीषि—'विशेषतः प्राणसंरक्षणं प्रियसखमुपलभ्य' इति । भवतु तावत् । तिष्ठ[1] । कोऽयं कमलापीडसदनाङ्गणे कलकलः । (श्रुतिमभिनीय सगद्गदम् ।) किं ब्रवीषि—'सखे, नूनं कमलापीडेन खड्गपाणिना सा मत्प्राणवल्लभा कलवाणी व्यापादिता । तत्कृतोऽयममन्दः परिजनाक्रन्दः । हा प्रिये कलवाणि, हा मदर्थत्यक्तजीविते, हा मत्प्राणवल्लभे, कथं पत्यपदेशेन पापीयसा मृत्युना दुर्दशां नीतासि । अथवा किमिति पतिरिहोपालभ्यते । किंत्वहमेव तावदुपालब्धव्यः ।

कण्ठाश्लेषं शशिमुखि मया तन्वता दोर्[2]रहिभ्यां
प्राणान्पातुं प्रणयगरलं नूनमापूरि गात्रे ।
नो चेत्पूर्वं यदमृतमयं नेत्रयोर्गात्रमासी-
त्तत्ते भर्तुः कथमिव भवेत्तादृशामर्षपात्रम् ॥ ३९ ॥' इति ।

वयस्य, कलकलमात्रेण [3]कथमेवमधीर इवासंह्यशोकपावके पतितोऽसि ।

---

१. 'तिष्ठ तिष्ठ' ख. २. 'दोर्युगाभ्यां' ख; 'दोरगाभ्यां' ग. ३. 'कथमापीतमदिर इव' ख; 'कथमापीतहृदय इव' ग.

नात्मनः प्राणान्गणयसि। किं ब्रवीषि—'सखे, किं ममापि प्राणेष्वभिष्वङ्गः। येनैवं

त्रैलोक्याद्भुतजीवरत्नमबलां स्वप्राणनाडीं पतिः
किं कुर्यात्कुपितोऽपि तामिति मया दुस्तर्कवक्रात्मना।
जाल्मेनानुपकारिणा जडधिया भूयः कृतघ्नेन म-
त्प्राणा एव निरीक्षिता न तु पुनः प्राणप्रिया रक्षिता ॥४०॥' इति।

(स्वगतम्।) कथमप्रतिकारशोकवेगः संवृत्तो वयस्यस्य। किमत्र कर्तव्यम्। इत्थं तावत्कथयामि। (प्रकाशम्।) वयस्य, तत्त्वतः कमलापीडस्य तस्यां प्रवृत्तिमनवेक्ष्य केवलेन कलकलेन किमप्यमङ्गलमुत्प्रेक्ष्य गदितुमेवमनुभवितुं वा क्लेशमनुचितम्। तदेहि। कलवाणीवृत्तान्तं तत्त्वतो ज्ञास्यावः' इति। (कतिचित्पदानि गत्वा विलोक्य च।) वयस्य, पश्य कोऽयं कक्षान्तरनिक्षिप्तकृपाणद्वितीयोऽर्धावगुण्ठितमूर्धा इत एव सत्वरमायाति। (निर्वर्ण्य।) किं ब्रवीषि—'सखे, अयं मदनुचरः कलकण्ठो मदवलोकनोत्कण्ठो जवादभिपतति। यः किल निशीथे कलवाणीविलासगृहं प्रविशता मया मदीयकृपाणं प्रदाय बाह्यकक्षान्तरे मम रक्षणाय निक्षिप्तः' इति। भवतु। एनमेव पृच्छावः। अरे कलकण्ठ, इत इतः। खड्गमुत्तंसयन्प्रणम्य किं ब्रवीषि—'सम्मक्खु अणुट्ठिदं देवस्स वअस्सेण मम सामिणा णिअघातदिण्णजीविदंवि जणं परिहरिअ अत्ताणं रक्खअन्तेण' (क) इति। (स्वगतम्।) कथमयं वयस्यमुपालभमानः कलवाणीमतं किंचिदशुभं

(क) सम्यक्खल्वनुष्ठितं देवस्य वयस्येन मम स्वामिना निजघातदत्तजीवितमपि जनं परिहृत्यात्मानं रक्षता।

१. 'अमलां' ख-ग. २. 'धौतात्मना' ख-ग. ३. 'केवलं' ख-ग. ४. 'इति' क-पुस्तके नास्ति. ५. 'द्वितयः' ख-ग. ६. 'इत एव' ख-ग-पुस्तकयोर्नास्ति. ७. 'मदवलोकनकृतोत्कण्ठो' ख-ग. ८. 'आदाय' ख. ९. 'ममैव' ख-ग. १०. 'अरे' ख-पुस्तके नास्ति. ११. 'अम्हे' ख. १२. 'णिअपादविसण्ण' ख. 'निजपादविषण्ण' इति तच्छाया. १३. 'अशुभं शुभं वा न' ख-ग.

पिशुनयति । (प्रकाशम् ।) अरे मूर्ख, किं दुःखितमेव वयस्यं[1] पुनरेवमरुंतु-देर्वचनैर्दुःखयसि । किं ब्रवीषि—'किंदि दुक्खिदो दे वअस्सो' (क) इति । केनापि न रक्षिता निजवल्लभा कमलापीडेन व्यापाद्यमाना कलवाणी । किं ब्रवीषि—'अह इं । केणावि ण रक्खिदा सा–' (ख) (इत्यर्धोक्ते ।) वयस्य, सास्रगद्गदं किं ब्रवीषि—

'द्वाभ्यामाभ्यां कुवलयमयी मालिका मत्कराभ्यां
यस्मिन्क्रीडाविधिषु निहिता सस्पृहं सानुकम्पम् ।
सोऽयं कण्ठः कनक[2]कदलीकन्दलीगर्भसारः
कान्ते जातः कथमसिलतावोरपातस्य[3] पात्रम् ॥ ४१ ॥' इति ।

(स्वगतम् ।) कथं वयस्यमाश्वासयामि ।

शोकं त्यजेति परुषं किमितः शुचेति
निन्दानुशोचनविधिर्बहुशोकहेतुः ।
मौनं कृपाविधुरता कथमात्तशोक-
माश्वासयन्ति सुहृदं सुहृदो न विद्मः ॥ ४२ ॥

(प्रकाशम् ।) वयस्य, निःशेषमसंबद्धप्रलापिनोऽस्य वचनमनाकर्ण्य[4] न युक्त-मेवं विलपितुम् । अरे, किं ब्रवीषि—'एव्वं णेदम् । एसो मह वअणं सम-ग्गं ण सुणादि' (ग) इति । समग्रमेव तावत्कथय । किं ब्रवीमि—'सुणिअदु दाव । एदं कहिअदि । ण केणावि रक्खिदा सा अप्पणो बुद्धिमन्दरेण' (घ) इति । वयस्य, तव प्रियतमात्मनो बुद्ध्या रक्षितेत्युक्तं भवति । तदलममङ्गलेन शोकेन । तत्प्रकारमेव पृच्छावः । (इति पटाञ्चलेनाश्रूणि परि-

(क) किमिति दुःखितस्ते वयस्यः ।
(ख) अथ किम् । केनापि न रक्षिता सा ।
(ग) एवमिदम् । एष मम वचनं समग्रं न शृणोति ।
(घ) श्रूयतां तावत् । एतत्कथ्यते न केनापि रक्षिता सात्मनो बुद्धिमन्तरेण

१. 'मे वयस्यं' ख. २. 'कमलकदली' ख. ३. 'दूरघातस्य' ख-ग. ४. आकर्ण्य' क.

नृज्य कलकण्ठमालोक्य च।) अरे कलकण्ठ, किं सा विनिष्क्रम्य सौभाग्यवीथिकां प्रविष्टा। यत्र भर्तुः क्षितिभर्तुर्वा भयं न भवति स्वैरिणीनाम्। वयस्य, किं ब्रवीषि—'यदि[1] गणिकासरणिमवतरति मदनकरिणी[2] सा तरुणी तदा

सौधे सुधाकिरणचुम्बिनि लम्बमान-
मुक्तावितानवति मञ्चतले शयानः।
आरोप्य वक्षसि ममानिशमायताक्षी-
मज्ञातरात्रिदिनभेदमहं वसेयम्॥ ४३॥' इति।

(कलकण्ठमालोक्य।) अरे, किं ब्रवीषि—'देव, एव्वं णेदम्।

धम्मिल्लअं सिरिमुहं हसिअं विआसि
णेत्ताइ सोणमहरं अ घणत्थणे अ।
ताए विलोइअ सआवि दिणं दिणंति
जाणादु को णु खु कहंवि णिसं णिसेति॥ ४४॥

किंदु तह ताए ण किदम्' (क) इति। तर्हि ततः किं कृतं कलवाण्या। किं ब्रवीषि—'देव, जाव इमो घरादो णिग्गदुअ तुवरिदं घरवणपहेण चलिदो दाव एव्व सा चदुरा अत्तणो आहरणाइं कहिं वि णिक्खिविअ णिअवक्खताडणपुव्वअं इमो इमो चोरो मह आहरणाइं आहरिअ गच्छइ। हा; हदम्हि। सुवो एव्व दूरदेसादो आअदे अज्जउत्ते किं करिस्सम्। किं कहइस्सम्। का गई। को णु सरणं ति अदिमेत्तं अक्कन्दन्ती

(क) देव, एवमेतत्।
धम्मिल्लकं श्रीमुखं हसितं विकासि
नेत्रे च शोणमधरं च घनस्तनौ च।
तस्या विलोक्य सदापि दिनं दिनमिति
जानातु को नु खलु कथमपि निशां निशेति॥
किंतु तथा तया न कृतम्।

१. 'तथा यदि' ख-ग. २. 'मदनमकरिणी' ख.

अस्सुधाराकिलिण्णलोअणा सअण्णादो णिग्गदा' (क) इति । (सबहुमानम् ।) साधु कलवाणि, साधु । वयस्य, अन्यादृशमेव खलु पतिप्रतारणचातुर्यमस्यास्तव प्रेयस्याः । (कलकण्ठं प्रति ।) ततस्ततः । किं ब्रवीषि—'तदो सोवि कमलापीडो सव्वं चोरचरिअं नव्व मण्णन्तो अइ हिअअवल्लहे, मा होहि मा होहि भआउला । एसो दे रक्खिदा सण्णिहितो कमलापीडोत्ति भणिअ तं एव्वं घरवणं किवाणपापी पविट्ठो । अहंवि दाव एव्व सुण्णद्धण्णकुम्भट्ठिदो लहु णिग्गमिअ देवपाअसण्णिहिं आअदोम्हि' (ख) इति । वयस्य, सा तव पुरातनपुण्यविभवेन विपदमिमामतीतवती[1] नितम्बिनी । किं ब्रवीषि—'तस्या एव नैपुण्यविभवेनेति वक्तव्यम्' इति । भवतु ! तथैव यथाभिलषितं[2] भवतः । (पदान्तरं गत्वा अङ्गुल्या निर्दिश्य ।) इयं[3]

> बिभ्राणा दरशिथिलां करेण नीवीं
> निश्वासस्फुरितकुचौ मुहुः स्पृशन्ती ।
> पश्यन्ती चकितमितस्ततो मृगाक्षी
> पर्यायस्खलितपदं[4] प्रयाति तूर्णम् ॥ ४५ ॥

किं ब्रवीषि—'किं न जानासि । इयं रत्नगुप्तस्नुषा'[5] इति । तर्हि जानामि । इयं किल

---

(क) देव, यावदसौ गृहान्निर्गत्य त्वरितं गृहवनपथेन चलितस्तावदेव सा चतुरात्मन आभरणानि कुत्रापि निक्षिप्य निजवक्षस्ताडनपूर्वकम् 'अयमयं चोरो ममाभरणान्याहृत्य गच्छति । हा, हतास्मि । श्व एव दूरदेशादागते आर्यपुत्रे किं करिष्यामि । किं कथयिष्यामि । का गतिः । को नु शरणम्' इत्यतिमात्रमाक्रन्दन्त्यश्रुधाराक्लिन्नलोचना सदनान्निर्गता ।

(ख) ततः सोऽपि कमलापीडः सर्वं चोरचरितमेव मन्यमानः 'अयि हृदयवल्लभे, मा भव मा भव भयाकुला । एष ते रक्षिता संनिहितः कमलापीडः' इति भणित्वा तदेव गृहवनं कृपाणपाणिः प्रविष्टः । अहमपि तावदेव शून्यधान्यकुम्भस्थितो लघु निर्गम्य देवपादसंनिधिमागतोऽस्मि ।

१. 'अतिनीतवती नितम्बवती' **ख-ग.** २. 'यथाभिमतं' **ख.** ३. 'कासौ येयम्' **ख-ग.** ४. 'पदापि याति' **ख**; 'पदानि याति' **ग.** ५. 'रत्नगुप्तस्य' **ख-ग.**

कार्ये सत्यपि जातु याति न बहिर्नाप्यन्यमालोकते
साध्वीरप्यनुकुर्वती[1] गुरुजनं श्वश्रूं च शुश्रूषते।
विस्रम्भं कुरुते च पत्युरधिकं प्राप्ते निशीथे पुन-
र्निद्राणे निजभर्तृबन्धुनिवहे निर्याति[2] रन्तुं विटैः॥ ४६॥

किं ब्रवीषि—

'एषैव योषितां धन्या शीलं च लभते सुखम्।
दिवा पतिव्रता भूत्वा[3] नक्तं च कुलटायते॥ ४७॥' इति।

वयस्य, सम्यगुक्तम्। (परिक्रम्य विलोक्य च।) वयस्य, पश्य पश्य। इयमिह

अङ्गुष्ठतर्जनीभ्यामधरं धृत्वा विलोकयत्यबला।
कुचयुगमुद्धृतसिचयं[4] पश्यति भावयति परिमृशत्यपि च॥ ४८॥

सखे, इतः पश्य।

एकं विश्लथकेशपाशनहने व्यापारयन्त्याः करं
श्वासोत्कम्पिकुचस्थलीपरिचलच्चेलाञ्चले[5] चापरम्।
अस्याः स्रंसिनि[6] लोलरत्नरशनालग्ने शनैरंशुके
मन्दं मन्दमिवाविरस्ति नयनानन्दाय नाभीसरः॥४९॥' इति।

(अन्यां निर्दिश्य।)

आलग्नैश्चरमाङ्गके त्रिचतुरैः शय्याप्रसूनैरियं
शङ्के[7] रन्ध्रगवेषिणा निजशरैर्विद्धेति पञ्चेषुणा।
मीलल्लोचनशोणकोणचपलप्रस्निग्धतारं मुखं
शीत्कारस्फुरिताधरं च सुतनोरस्या यदुत्ताम्यति॥ ५०॥

(क्षणमात्रं विचिन्त्य।) किं ब्रवीषि—'सखे, किंचित्पृच्छामि यदि सत्यमेव

१. 'अनुकुर्वते' **ख-ग.** २. 'निखिले जने शशिमुखी निर्याति' **ख-ग.** ३. 'भूयो नक्तं च कुलटा यतः' **ख-ग.** ४. 'कुचकलशयुगलमुद्धृतसिचया पश्यति परामृशत्यपि च' **ख.** ५. 'परिगलत्' **ख-ग.** ६. 'स्रंसति' **ख**; 'स्रंसिन' **ग.** ७. 'मन्ये' **ख.**

कथयसि, न वञ्चयसि' इति । वयस्य, किंचित्कदापि किं कथितपूर्वमसत्यम्, येनाधुनाप्यसत्यकथनेन[1] वञ्चयामि । किं ब्रवीषि—

'कार्श्यं दधाति गात्रं गमयति निद्रालयं च नेत्रान्तः ।
विरहदहनातिरेकं विवृणोति श्वसितमारुतोऽपि तव ॥ ५१ ॥

किमत्र कारणम्' इति । (स्वगतम् ।) कथं कृतावहित्थोऽप्यहमनेन विदितोऽस्मि । (प्रकाशम् ।) अस्ति कारणम् । (कर्णे ।) एवमिदम्[2] । किं ब्रवीषि—'अद्यैव पुरोहितपुत्रं वीतिहोत्रमाश्रयस्व' इति । किमद्याश्रयण-[3]मस्ति । स मे बालमित्रं पुरोहितपुत्रः । किं ब्रवीषि—'तर्हि स[4] भवतो विदितवृत्तान्तः कार्तान्तिकशिरोमणिः स्वयं कंचिदन्तरायं पिशुनयंस्तस्याः पतिगृहगमनं निवारयति' इति । वयस्य, साधु मन्त्रितम् । क्व पुनरद्य पुरोहितपुत्रः । (सविमर्शम् ।) किं ब्रवीषि—'तेन नियतमद्य देवतार्चनाय कुसुमान्यवचिन्वता पुरोद्याने स्थातव्यम्' इति । कलकण्ठ, किं ब्रवीषि—'चेडिआअच्चणायेत्ति भणिदव्वम्' (क) इति । आः दुर्मते, पूजार्हेष्वपि यत्किंचित्प्रलपसि । किं ब्रवीषि—'कहं पूआअरिहो सो, सन्दिहोमबलिकम्मएसु जं दक्खिणेत्ति दविणं गहिअदि तप्पणीकदुअ मत्थएण जो चेडिआणं चरणाइं वन्दइ' (ख) इति । वयस्य, त्वमपि किं ब्रवीषि—'सखे, एवमेतत् ।

विस्फूर्जत्तिमिरे कुटीरकुहरे ह्युन्मीलितोन्मीलितै-
रायासेन पुरीपुरोहितसुतैस्तावन्निशा नीयते ।
सायं स्वीकृतदक्षिणावसुपणो यावन्निजस्वामिनी-
प्रस्वापावधिकोपचारनिरतो नाभ्येति दासीजनः ॥ ५२ ॥' इति ।

(सोपहासम् ।) वयस्य, न जानासि ।

(क) चेटिकार्चनायेति भणितव्यम् ।

(ख) कथं पूजार्हः सः, शान्तिहोमबलिकर्मकेषु यद्दक्षिणेति द्रविणं गृह्यते तत्पणीकृत्य मस्तकेन यश्चेटिकानां चरणानि वन्दते ।

१. 'असत्यवचनेन' **ख-ग.** २. 'एवमिति' **ख-ग.** ३. 'आश्रयणीयं' **ख-ग.** ४. 'स एव' **ख-ग.** ५. 'हा'.

गणिकानिशान्तघटचेटिकाविटाः
कतिचित्परे पुनरयं तु मे सखा ।
सफलीकरोति परयोषिदुन्नत-
स्तनकुम्भिकुम्भपरिरम्भणैरुरः ॥ ५३ ॥

तदहमुद्यानं गत्वा पुरोहितपुत्रमन्वेषयामि । क्व पुनरितो गच्छति वयस्यः । किं ब्रवीषि—'वेशवाटीम्' इति । सन्तु शुभास्ते पन्थानः । (कतिचित्पदान्यतिक्रम्य ।) इयं खलु विशृङ्खलमदावष्टम्भविजृम्भमाणमदनधनुष्टंकारशङ्कावह-मधुपझंकारमुखरशिखरा ललितरसालकिसलयास्वादसुहितपरभृतकुलबहुल-कोलाहला मन्दमन्दस्यन्दमानमकरन्दबिन्दुसंदोहपरिपूरितकुसुमपरागपरम्परापरिकल्पितालवालरेखा विभाति वनरेखा । (वनप्रवेशं नाटयित्वा विलोक्य ।) अत्र हि

परागपालीघनसैकतासु मन्दं मिलिन्दा मधुवाहिनीषु ।
क्रीडन्ति मन्दानिलकर्णधारसंचार्यमाणप्रसवप्लवासु ॥ ५४ ॥

(अन्यतो विलोक्य ।) आप्रभातमिहैव विहरन्ति पौरजारिण्यः ।

एतान्यङ्गजकेलिभग्नवलयान्येषा परिष्कारभू-
रेतत्पल्लवतल्पमेष चिकुरस्रस्तः प्रसूनोच्चयः ।
एषा विस्मृतहारयष्टिरिदमालिप्तं पदं लक्तकै-
रेताः कामुकलोकपादकमलन्यासैकधन्या भुवः ॥ ५५ ॥

(पदान्तरं गत्वा ।) कथमियमुद्यानपालिका मरालिका । सखि मरालिके, किमत्र कुसुमावचयार्थमागतो वयस्यो मे वीतिहोत्रः । किं ब्रवीषि—'अह इं । दाणिं एव्व कुसुमपुडिआहत्थो दक्खिणदो रुक्खवाडीं पविट्ठो' (क) इति ।

(क) अथ किम् । इदानीमेष कुसुमपुटिकाहस्तो दक्षिणतो वृक्षवाटीं प्रविष्टः ।

१. 'तथा सखा' ख. २. 'वेश्यावाटीम्' ख-ग. ३. 'सुखित' क. ४. 'हस्तकैः' क. ५. 'कथमिहोद्यान' ख-ग.

तमेव पन्थानं दर्शय । किं ब्रवीषि—'इदो'[1] (क) इति । (पदान्तरं गत्वा ।) सखि, पश्य ।

यथा यथायं मरकन्दपूरैरापूरयत्याम्रतरुः प्रकामम् ।
तथा तथा मन्दमरुत्परागैरुदञ्चयत्युन्नतमालवालम् ॥ ५६ ॥

(निर्दिश्य ।)

[2]कुसुमरसबिन्दुपूरे बम्भरगम्भीरधीरझंकारे ।
मञ्जुलरसालपुञ्जे सरसा विहरन्ति सरसमिह कुञ्जे ॥ ५७ ॥

किं ब्रवीषि—'णं आणामि (ख) ('कुसुमरसबिन्दुपूरे' इत्यादि पठति । पुनरन्यतो विलोक्य सविषादमिव ।)

अस्मिन्निष्पतितोष्णबाष्पसलिलम्लानाङ्कुरे केवलं
क्लृप्ता वल्लभविप्रलब्धसुदृशा[3] संकेतकुञ्जोदरे ।
कंदर्पासिनिकृत्तगात्रपतितस्त्यानामिषप्रोच्चय-
श्रेणीवेयमशोकपल्लवमयी शय्या दरीदृश्यते ॥ ५८ ॥

किं ब्रवीषि—'इदो पेक्ख, इदो[4] पेक्ख । इमो दे वअस्सो' (ग) इति । (दृष्ट्वा सहर्षम् ।) कथमग्रत एव वयस्यः ।

आलम्बिपुष्पपुटकेन करेण शाखा-
मालम्व्य तत्क्षणसमुच्चलितालिजालाम् ।
उद्यम्य दक्षिणकराग्रमुदीक्षमाणः
पुष्पाण्यसाववचिनोति कुरण्टकस्य ॥ ५९ ॥

(उपसृत्य ।) वयस्य—(इत्यर्धोक्ते । ससंभ्रमं शाखामुत्सृज्य क्षणमवलोक्य च ।) किं ब्रवीषि—'सखे, संप्रति दुर्विज्ञानं तवाधिज्ञानम्[5] । यतः ।

---

(क) इतः ।
(ख) ननु जानामि ।
(ग) इतः पश्य, इतः पश्य । अयं ते वयस्यः ।

१. 'दो इदो इति' ख-ग. २. 'समसंस्कृतप्राकृतम्' इति ख-पुस्तके टिप्पणम्. ३. 'सुदृशः' ख-ग. ४. 'इदो' ख-ग-पुस्तकयोर्नास्ति. ५. 'तवाभिज्ञानम्' ख-ग.

कामं कृशैरवयवैः परिपाण्डुरेण
गण्डस्थलेन च भृशालसया दृशा च ।
बिम्बाधरेण च मुहुर्मसृणीकृतेन
मन्ये भवन्तमधुना भवदन्यमेव ॥ ६० ॥

किंचान्यत् ।

आरक्तमर्धपरिमृष्टनवाश्रुपूरं
पक्ष्मावपातभरदुष्प्रसरावलोकम् ।
एतत्तवाक्षियुगलं विवृणोति कान्ता-
विश्लेषजं किमपि दुःखमसह्यवेगम् ॥ ६१ ॥

तत्किं प्रस्थिता मञ्जरी पतिभवनम्' इति । (स्वगतम् ।) कथमयं जानात्येव प्रथममकथितमपि रहस्यम् । अथवा दैवज्ञानां किमविज्ञातमस्ति । (प्रकाशम् ।) अपि नाम पश्यसि ज्योतिःशास्त्रेण चक्षुषा मे चरितम् ।

यन्न वेत्ति परः किंचिदेकां मुक्त्वा जटाव्रतीम् ।
या निष्कुटवने तन्वीं मया तां समयोजयत् ॥ ६२ ॥

(विहस्य ।) किं ब्रवीषि—किमेतत्परिज्ञानार्थमपि ज्योतिःशास्त्रं चक्षुरपेक्षितम् । यतः ।

क्रीडा परस्त्रीषु कियद्भिरेव दिनैर्निगूढापि न[1] गूढिमेति ।
पङ्के निखातापि गभीरतोये पाथोजिनी किं न समुज्जिहीते ॥ ६३ ॥' इति ।
यद्येवं तर्हि किमिति न परिहरन्ति न परिवदन्ति च पद्ममुखीम् । किं ब्रवीषि—'मा मैवं वादीः ।

सुचरितमीदृशमखिलं सर्वे जानन्ति सर्वेषाम् ।
न तु परिवदन्ति निपुणाः स्फुटतरमेते परस्परत्रासात् ॥ ६४ ॥

तत्कतिपयैरेव दिवसैरियं स्वयं परिहरिष्यति सकलमपि बन्धुकुलम्' इति । (निःश्वस्य ।) वयस्य[2], अतःपरमखिलमपि संभावयामि, यदि तावदिदानीं शार्दूलवदनबिलादवगलति सा हरिणाक्षी । किं वदसि—'सखे, नक्तमेवोक्तं

१. 'निरूढिमेति' ख-ग. २. 'वयस्य' ख-ग-पुस्तकयोर्नास्ति.

त्वयि स्नेहवत्या जटावत्या । वत्स, तथा प्रयतितव्यं यथा मन्दारदुहिता मञ्जरी पतिमन्दिरकन्दरभाजनं न भवेत् । तत्प्रथममुपदेशो भगवत्या जटावत्याः । तदुपरि प्रियसुहृदो निदेश इत्युभयथाप्यवश्यं करणीयमेव मे मञ्जरीगमनभञ्जनम्, तव च मनोरञ्जनम्' इति । (स्वगतम् ।) अहो मयि भगवत्या जटावत्याः प्रसादातिशयः, यदेवमप्रार्थिताप्यननुयुक्ताप्यात्मनैव कृतप्रयत्ना ममैव हितमातनोति । (प्रकाशम् ।) इत्थं कृतनिश्चये त्वयि तावदस्माकं

> सहजप्रेमसंरसे स्वभावचतुरे जने ।
> किमर्पितात्मभाराणां वक्तव्यमवशिष्यते ॥ ६५ ॥

तदद्य सत्वरमेव त्वया गन्तव्यम् । किं ब्रवीषि—'अहं गच्छामि' इति । (विलोक्य ।) कथमतिक्रान्त एव प्रियमित्रेण प्रमदवनपर्यन्तः । मरालिके, किं ब्रवीषि—'इदो कमलमित्तेण मित्तेण अक्कन्दो पुव्वगिरिपज्जन्तो' (क) इति । (प्राचीमवलोक्य ।)

> घटमानकोककुचमामृशन्करैर्विकसत्त्वयोजनयनावलोकितः ।
> परिचुम्बतीदमरुणप्रभाधरं रविरद्य वारवनितामुखं मुहुः ॥ ६६ ॥

अथवा ।

> भूयो निपीय लवणाम्बुधिमाप्रभातं
> पुञ्जीभवन्नुदयते तपनच्छलेन ।
> और्वाग्निरम्बरपयोनिधिमद्य पातुं
> लीनोडुबुद्बुदकदम्बमिति प्रतीमः ॥ ६७ ॥

(वामतोऽवलोक्य ।)

> उन्निद्रपद्मकोशादुद्गच्छन्ती शनैरविच्छिन्ना ।
> इयमिह मधुपश्रेणी स्मरकरखड्गश्रियं वहति ॥ ६८ ॥

(क) इतः कमलमित्रेण मित्रेणाक्रान्तः पूर्वगिरिपर्यन्तः

१. 'रसिके' ख-ग. २. 'अयं' ख.

किं ब्रवीषि—'तक्खु पुव्वदिणविअसिअं सरसिअम्, जदो उग्गयहि महुअरश्शेणी' (क) इति । यद्येवमद्यैव विकसितं कमलाविलसितं दर्शय मे कमलम् । (निर्दिश्य ।) किं ब्रवीषि—'एदं पेक्ख । जत्थ (ख)

इन्दिरावरविहारमन्दिरे मन्दमन्दमरविन्दकंदरे ।
गन्धतुन्दिलमरन्दसुन्दरे बम्भरा इह चरन्ति बन्धुरे ॥ ६९ ॥'

इति । (सशिरःकम्पं तदेव पठित्वा ।) सखि, कथमपूर्वमेव कथयसि समसंस्कृतप्राकृतं हृद्यं पद्यम् ।

कराग्रहादब्जिनि केवलं ते विभुर्विवस्वानिति लोकवादः ।
आप्रातरासायमपास्तशङ्कं भुङ्क्ते रसं भूरि मिलिन्द एव ॥ ७० ॥

किं च ।

जन्मारभ्य प्रतिकलमसावारजोदर्शनं ते
भ्राम्यन्भृङ्गः क्षणगणनया वासरानत्यनैषीत् ।
त्वं तूद्भिन्ने रजसि मरुता दक्षिणेनासि भुक्ता
सोढव्यं तत्कमलिनि कथं तेन लोकेन वापि ॥ ७१ ॥

(पुनर्विलोक्य ।)

आलिप्ताः कुसुमपरागभस्मनामी
कापालव्रतमिव काममाचरन्तः ।
गायन्तः किमपि मधूनि भिक्षमाणा
गाहन्ते कमलगृहाङ्गणानि भृङ्गाः ॥ ७२ ॥

(पदान्तरं गत्वा ।) अयि, पश्य तावत् । एष पौरणिको मुद्गलभट्ट इत एवाभिवर्तते । किं ब्रवीषि—'जाणानि णं गूढपालविअम् । अअं क्खु

(क) तत्खलु पूर्वदिनविकसितं सरसिजम्, यत उद्गच्छति मधुकरश्रेणी ।
(ख) एतत्पश्य । यत्र ।

१. 'विकसितकमल' क. २. 'बन्धुरे' ख-ग. ३. 'सुन्दरे' ख-ग. ४. 'कलयसि' क. ५. 'गृहान्तराणि' ख-ग.

तह तह पढइ पुराणं तह तह वक्खाइं अत्थेवि।

तह तह पेक्खइ किदवो जह जह रज्जन्दि बालविहवाओ॥ ७३॥

एदं क्खु सुणिदं जं मुग्गलभट्टोत्ति। किंदु चिदम्बरभट्टोत्ति एव्व किल एदस्स णाम' (क) इति। सत्यं चिदम्बरभट्ट इति तातकृतं नाम। गुर्जरास्तु मुद्गलभट्ट इत्याह्वयन्ति। भवतु तावत्। एनमालापयामि। (उपसृत्य। एकं हस्तमुत्तंसयन्।) पौराणिक, प्रणम्यसे भुजंगशेखरेण। किं ब्रवीषि—'सकलरतिकलादेशिकेऽपि त्वयि कामाशिषमाशास्महे' इति। (सविनयम्।) कथमलीकवचोभिरेव मयि गौरवमारोपयसि। किं ब्रवीषि—'अपि नाम ममापि वचनमलीकं संभावयसि। स्मरसि तावदिदानीं त्वमेव

उत्ताने शयने ललन्नुपहसन्नव्यक्तमालापय-

न्बाल्येऽपि व्रजसुभ्रुवां रतिकलाः किं कृष्ण नोपादिशः।

या दोलावलनच्छलादुपरि ते व्यातेनुरुत्कण्ठया

यत्किंचित्क्रममुच्चलत्कुचकचश्रेणीकमेणीदृशः॥ ७४॥' इति।

भवतु। कस्य गृहमद्य पवित्रीकर्तुमुद्यमः। किं ब्रवीषि—गुर्जरस्य निर्जरदासस्य गृहम्' इति। (स्वगतम्।)

एष नक्तंदिवं तस्य मन्दिरं न विमुञ्चति।

कलावत्यक्षियुगलमलोहनिगडं यतः॥ ७५॥

(प्रकाशम्।) तर्हि गृहिणीमिति वक्तव्यम्। किं भणसि—'सा खलु विश्रुतपुण्यचरिता शक्नोति जगदेव पवित्रीकर्तुम्' इति। (सकौतुकम्।) कथय तस्याः पुण्यचरितम्। किं वदसि—

(क) जानाम्येनं गूढपालविकम्। अयं खलु

तथा तथा पठति पुराणं तथा तथा वक्ष्यत्यर्थानपि।

तथा तथा प्रेक्षते कितवो यथा यथा रज्यन्ते बालविधवाः॥ ७३॥

एतत्खलु श्रुतं यन्मुद्गलभट्ट इति। किंतु चिदम्बरभट्ट इत्येव किलैतस्य नाम।

१. 'रति' ख-ग-पुस्तकयोर्नास्ति. २. 'मम' ख-ग. ३. 'उत्तान' ख-ग. ४. कस्य वा' ख-ग. ५. 'विश्वतः पुण्य' ख.

'मध्यं विष्णुपदं कुचौ शिवपदं वक्त्रं विधातुः पदं
धम्मिल्लः सुमनःपदं प्रविलसत्काञ्ची नितम्बस्थली।
वाणी चेन्मधुराधरोऽरुणधरः श्रीरङ्गभूमिर्वपु-
स्तस्याः किं कथयामि पुण्यचरितं मान्या सदा निर्जरैः॥ ७६॥' इति।

(सबहुमानम्।) तत एव तत्रभवान्महीयते। भवतु। तत्रभवति कीदृशी तस्या मनोवृत्तिः। किं ब्रवीषि—'किमपूर्वमिव[1] पृच्छसि।
पुरुषोत्तमाय भवते देवायेदमिति मे समर्पयति।
सायंतननीराजनसमये वीटीशतं वधूटी सा॥ ७७॥' इति।

सत्यं जानामि।
धर्मोपदेशगुरुरित्यखिलान्प्रतार्य
बाह्योपचारशतमातनुते नतभ्रूः।
अभ्यन्तरे तु रतिदेशिक इत्यनङ्ग-
तत्त्वं तदेव कुरुते गुरुदक्षिणांते॥ ७८॥

(अनादरमिव।) किं ब्रवीषि—'सखे, किमेतावतैव मे साम्राज्यम्।
कूर्पासगूढकुचपङ्कजकुड्मलानां
को नाम शंसति रतिं भुवि गुर्जरीणाम्।
अज्ञातचोलदुरुपद्रवचोलनारी-
पीनस्तनस्तबकमण्डलदत्तहस्तः॥ ७९॥' इति।

(आत्मगतम्।) सर्वोऽपि जनः सजातीयमेव प्रियं मन्यते।
ये भुवि यज्जातीयास्तज्जातीयासु तेऽनुरज्यन्ते।
शुकयोषिति पिकयूनोरुदयति किं प्रीतिरन्योन्यम्॥ ८०॥

(प्रकाशम्।) अये[2], कस्ते चोलनारीषु[3] पक्षपातः।
चोलच्छन्ना यदि कुचतटी दुर्लभा गुर्जरीणां
कच्छाभावादलघुजघनं तर्हि शक्यावमर्शम्।
तद्व्यत्यस्तं द्रविडसुदृशामन्ततः किं ततः स्या-
देकत्रैकं भवति सुलभं तद्वदन्यत्र चान्यत्॥ ८१॥

---

१. 'सखे, किमपूर्वमेव' ख-ग. २. 'अरे' क. ३. 'चोलीषु' ख-ग.

परंतु नक्तंदिवमपि पतिपार्श्ववर्तिनी सा कथमनुवर्तनीया तत्रभवतेति तरलं भवति मे चेतः । किं ब्रवीषि—'यत्किंचिदेतत् । यतः ।

कथितसमये गत्वा गूढं मया लिखिता नखैः
स्वपिति[1] शयने पत्यौ पार्श्वेऽप्यहो परिवृत्य सा ।
तमपि निपुणालिङ्ग्यैवालं भुजालतयैकया
चपलनयना मां च क्रोडीकरोति तदन्यया ॥ ८२ ॥' इति ।

(साश्चर्यम् ।) अहो श्रोत्रियस्य साहसम् (मरालिकां प्रति ।)

विधत्तां संकेतं विशतु सदनं वा कथमपि
क्रमात्तस्यां गूढं किमपि कुरुतां वा मृगदृशी ।
प्रबुद्धे पत्यौ चेदयमपि भवेत्कीदृशदशो
वराकी वा सा तद्भुजवलयलग्ना[2] सखि तदा ॥ ८३ ॥

पौराणिक, किं ब्रवीषि—'प्रबुद्धेन तेन वा किं कर्तव्यम् ।

गुर्जरीणां कुलाचारक्रमोऽयं यद्गृहे गृहे ।
पौराणिकः पुरोधा वा भृत्यो वा गूढवल्लभः ॥ ८४ ॥

तदलमतिप्रसङ्गेन । साधयामि' इति । साधय साधय । अहमपि वेशवाटिकां गच्छामि । (मरालिकामालोक्य ।) सखि, पुरोहितपुत्रस्य वीतिहोत्रस्य प्रवृत्तिमचिरेण ज्ञातुमर्हसि । किं ब्रवीपि—'तस्स अ ताए तुह दइआए अ उत्तन्तं सम्मं ओलहिअ तुज्झ अज्ज एव्व णिवेदेमि' (क) इति । सखि, साधु । गन्तव्यम् । (परिक्रम्यावलोक्य च ।) एषा किल योषाकलभाषाजित[3]रोषायित[4]कीरायुतकारायितमणिमञ्जुलरुचिपिञ्जरनवपञ्जरमालाशतलीलायुतप्रतिसदनप्रतिहारा पारावतवाराश्रितविटङ्का धारायन्त्रशतसंतानितजलबिन्दु[5]कंकणा कुङ्कुमरसपङ्किलसदनाङ्गणा लङ्केव लक्ष्यमाणा-

(क) तस्य च तस्यास्तव दयितायाश्च वृत्तान्तं सम्यगुपलभ्य तवाद्यैव निवेदयामि ।

१. 'स्वपतिशयने' क. २. 'मग्ना' ख-ग. ३. 'जन' क-ग. ४. 'रोषाधृत' क, 'रोषायित' ख. ५. 'जलबिन्दु' ख-ग-पुस्तकयोर्नास्ति.

क्षविहारा, अयोध्येव रामानुवृत्तभरतप्रचारा, हरमूर्तिरिव भुजंगविभूषिता, सरसीव पद्मिनीप्रचुरा, वनभूमिरिव हस्तिनीकरनमितपुंनागा, कादम्बरीव प्रकटितहेमकूटविस्तारा, नारायणतनुरिव भोगिभोगानुषक्ता, विप्रसभेव श्रुतिमिलितविविधवाद्यारब्धकोलाहला हालामदतरलचेटिकाहस्तविस्रस्तपेटिकागलितवीटिकाकलनचटुलचटिका वेशवाटिका । (प्रविशति नाटितकेन । किंचित्परिक्रम्य ।) इह हि

चरन्तीनां सौधे चपलनयनानां तनुरुचो
गवाक्षान्तर्वान्ताः कतिचन गृहीत्वा जलमुचः ।
क्षणं गोपायन्ति क्षणरुचिमिषेण क्षणमहो
विवृण्वन्ति स्वर्णं करगतमिवाकिंचनजनाः ॥ ८५ ॥

किं च ।

तारास्तामरसाञ्चलेषु कदलीकाण्डेषु भूमण्डला-
न्यावर्ता गगने शिरःसु फणिनां शैलास्तुषारत्विषाम् ।
बिम्बेष्वम्बुजपत्रचुम्बिषु तमस्तोमास्तदेतत्पुनः
सर्वं हेमलतासु ताः प्रतिगृहं चित्रं प्रतिप्राङ्गणम् ॥ ८६ ॥

(सर्वतोऽवलोक्य ।) अहो रमणीयता बालातपस्य ।

रञ्जयति लोकमखिलं ललितो बालातपप्रसरः ।
सरसयति सदनवापीसारससौरभ्यसंपदप्यभितः ॥ ८७ ॥

(आकाशे ।) किं ब्रूथ—

'इह क्रीडावल्गत्कुवलयदृशामेतदधर-
प्रभावीचीरोचिर्विलसति न बालातपरुचिः ।
असावप्येतासां वदनकमलामोदलहरी
न तु क्रीडावापीसरसिजवनीसौरभझरी ॥ ८८ ॥' इति

सत्यमीदृशः किलात्र मृगीदृशः । यतः ।

लब्ध्वाम्भोजे मुखशयपदा दृक्तरङ्गैः सभृङ्गे
दोर्वल्लीभ्यां बिसवति कचैरात्तशैवालजाले ।

१. 'वेश्यावाटिका' ख. २. 'गोपायन्तः' क. ३. 'आप्त' ख-ग.

वक्षोबद्धस्तनघनलसत्कुम्भतुम्बीफलाभ्यां
वारस्त्रैणं निजरुचिसरोमण्डले पोप्लवीति ॥ ८९ ॥

(कतिचित्पदानि गत्वा । निर्वर्ण्य ।) कथमत्रैव बालातपमनुभवति लीलावती । अस्याः

आमृश्य नीलकबरीमवसज्य कण्ठे
गाढोपगूढकठिनस्तनकुम्भभारः ।
नीवीमपि श्लथयितुं निभृतं कराग्रै
रागाद्रविः स्पृशति नाभिपदं नताङ्ग्याः ॥ ९० ॥

अपि च ।

बालातपमपमार्ष्टुं बाला पर्युषितकुङ्कुमभ्रान्त्या ।
स्तनतटमार्द्रनखाङ्कं काषं काषं करेण सीत्कुरुते ॥ ९१ ॥

(उपसृत्य ।) सखि, तव सीत्कारसुधारसश्चिराय मे श्रवणयोरानन्दं कन्दलयति । साभिमानावहित्थं किं ब्रवीषि—'का तव पुरतः पुरा पुनरद्य वा कृतवती सीत्कारम्' इति । तर्हि विस्मृतम् । वयं तु न विस्मरामः । यतः ।

कान्ते चूतजिते तवाधरदले दष्टे सरागं मया
स्वैरस्रंसिदुकूलदृश्यजघना तत्रैव लोलेक्षणम् ।
मामुद्वीक्ष्य सरोषलज्जमसकृत्सीत्कारतारं वचो
यत्त्वं जल्पितवत्यलं तदधुनाप्यानन्दयत्येव न ॥ ९२ ॥

सरोषं किं ब्रवीषि—'कथमेवमनृतभूषितं ते भाषितम् । अथवा ।

यस्या नखशिखमनृतालिङ्गितमङ्गं जनिष्वनेकासु ।
कथयसि कथमथ तत्त्वं स त्वं कृष्णानृतोज्झितो भूयः ॥९३॥' इति ।

(विहस्य ।) कुतोऽन्यत्राप्यनृतकथा ।

यत्किलात्र भुवनत्रयोदरे संकटेन समवस्थितं चिरात् ।
तत्समस्तमनृतं नताङ्गि ते कुक्षिलग्नमवलग्नकैतवात् ॥ ९४ ॥

किं ब्रवीषि—'गच्छ यथागतम् । किमनेन वाक्कलहेन' इति । तर्हि कायिकमेव कुरु कलहम् ।

---

१. 'एष' क.

बद्धा दोर्भ्यामभिमतगृहे मामधस्तान्निपात्य
द्रागारुह्य[1] स्तनगिरिहतोरस्कमास्कन्दयन्ती ।
तावत्कान्ते रचय सकलं साहसं हृद्गतं ते
श्रान्ता यावत्कनकसुमनोमालिकेवासि तान्ता ॥ ९५ ॥

किं ब्रवीषि—'अद्य दिनमुखे कस्य वा मुखमवलोकितमित्थमनेन विवदितुम्' इति । (सस्मितम् ।) अयि मानिनि, तदपि मे[2] सुखावहं संभावयामि ।

शनैरुत्तिष्ठन्त्यास्तव करधृते[3] हेमवसने
हठादाकृष्टे सत्यतिभृशनमद्गात्रलतिका ।
सरोषं सव्रीडं सुमुखि मुखमालोकितवती
प्रभाते यस्य त्वं स्मरसि कृतिनस्तस्य न कथम् ॥ ९६ ॥

किं ब्रवीषि—'कुतः स्वमानमविज्ञाय[4] सीमानमतिक्रामसि' इति । (स्वगतम् ।) इयं सुलभकोपा सर्वथा परिहासवचोऽपि मे परमार्थं मन्यते । तदन्यतो[5] नयामि । (प्रकाशम् ।) अयि प्रिये, मा कृथा मयि वृथा[6] कोपाडम्बरम् । अम्बरमाभरणानि वा यदभिलषितं तदाशु वृणीष्व । वितरिष्यामि । साञ्जलिबन्धं किं ब्रवीषि—'अलं तावदतिवदान्यतया ।

याचामहे जातु न किंचन त्वां पुण्यप्रदानादधिकं तवेदम् ।
गोपाङ्गनाचारुदुकूलचोरो यत्कृष्ण मुष्णासि न विद्यमानम् ॥९७॥' इति ।

मुग्धे, न जानासि जाराणां चोरः खलु मुख्यः । सस्मितं किं ब्रवीषि—'भाव, सत्यं चोर एवासि । यदेवं मोचारसमुचा वाचा मे चेतश्चोरयसि । (सानन्दम् ।) सखि, यदि प्रसन्नमुखी जातासि, तर्हि शृणु ।

आलिङ्ग्य गाढममलाङ्गि तवाङ्गमङ्गै[7]-
रापाटलं त्वदधरं मधुरं निपीय ।

१. 'आरुह्य' क. २. 'किमहं न जानामि' ख. ३. 'कृते' ख-ग. ४. 'अविज्ञाय सीमानम्' ख-ग-पुस्तकयोर्नास्ति. ५. 'यावदन्यतो' ख-ग. ६. 'मुधा' ख-ग. ७. 'अङ्गमङ्ग' ख-ग.

नीवीमथ श्लथयितुं निभृतं करेण
नीलोत्पलाक्षि यतते नितरां मनो मे ॥ ९८ ॥

किं ब्रवीषि—'भवतु नाम[1] । याहि, सायमायाहि' इति[2] । तर्हि गच्छामि । (इत्यन्यतो[3] गत्वा विलोक्य ।) कथमत्रैव काञ्चनलतासन्तानकौ । (निर्वर्ण्य ।) इयमिदानीं

विलोकयन्तीं मुकुरे विलासान्मुखाम्बुजं मुग्धकुरङ्गनेत्रम् ।
कर्पूरपङ्केन करोति बाला बालेन्दुलेखातिलकं[4] ललाटे ॥ ९९ ॥

(उपसृत्य ।) सखि,

तप्त्वा तपो हरशिरस्तटिनीतटान्ते
मुक्त्वा कलङ्कमयि ते मुखभावलाभात्[5] ।
बालेन्दुचारुतिलकेन चिराय बाले
चन्द्रोऽन्वविन्ददिव नन्दनजन्मशर्म ॥ १०० ॥

सविनयं किं ब्रवीषि—'चिराय स्मरणसरणीमधिरोपितासि भावेन[6]' इति । सखि, मा मैवम् । अद्यापि

वल्गत्कुचानि वलनासहमध्यमानि
कण्ठोदयत्कलरुतानि गलत्कचानि ।
आस्वादिताधरदलान्यलसेक्षणानि
तान्येव तन्वि सुरतानि तव स्मरामि ॥ १०१ ॥

किं च ।

ध्वान्तप्रान्तपरीतशीतकिरणं निद्रालुनीलोत्पलं
मन्दोदञ्चिकपोतनादमधुरं शश्वद्गलत्तारकम् ।
चक्रद्वन्द्वविलासनाट्यचतुरं चञ्चत्तुषारोदयं
चेतो मे समयं तमेव सुदति प्रासुं पुनर्वाञ्छति ॥ १०२ ॥

१. 'नामाद्य' ख-ग. २. 'इति' क-पुस्तके नास्ति. ३. 'इत्यग्रतोऽवलोक्य' ख. ४. 'रेखातिलकं निटाले' ख. ५. 'लोभात्' क. ६. 'रोहितास्म्यस्मद्भावेन' ख.

किं ब्रवीषि—'भाव, मुरलीवल्लभस्य कथं तव[1] मादृशीषु तरलीभावः[2] । तथाहि ।

संकेतानयनाय सारसदृशां सा कृष्ण ते दूतिका
क्रीडालापकलापगानचतुरा केलीवयस्या च सा ।
त्वद्बिम्बाधरचुम्बनादृतमुखी सैवान्ततः प्रेयसी
या ते पाणिपरिग्रहेण मुरली नानामुखं[3] जल्पति ॥ १०३ ॥' इति ।

(अपवार्य ।) वयस्य संतानक, सांप्रतं सफलतपःसंतान इव लक्ष्यसे । यतः ।

वक्षस्ते दृढलग्नकर्कशकुचद्वन्द्वावभुग्नान्तरं
कण्ठः कंकणरत्नकोटिकलनासुव्यक्तमुद्राङ्कितः ।
व्यत्यासव्यतिषञ्जितश्च तिलकः फाले तवायं सखे
कस्याश्चित्प्रकटीकरोति सुरतप्रौढिं परां सुभ्रुवः ॥ १०४ ॥

वयस्य, किं ब्रवीषि—'अस्या एव[4] । अथ किं

विविधकरणकल्पनातिशिल्पं सपुलकचुम्बनडम्बराभिरामम् ।
कलरवकलकूजिताचकण्ठं निधुवनकौशलमद्भुतं नताङ्ग्याः ॥१०५॥' इति ।

(सौत्सुक्यम् ।) का सा रसिका युवमनःकासारसारसिका[5] । किं ब्रवीषि—'इयमेव' इति । (सबहुमानम् ।)

कुसुमशरविधेयं कोमलं रूपधेयं[6]
तदनुगुणविकासस्त्वद्गुणानां विलासः ।
किमितरमिह[7] लोकानन्दहेतुस्त्वमेका
तव रतिसुखभाजः कामिनोऽपि द्युराजः ॥ १०६ ॥

(सप्रश्रयम् ।) किं ब्रवीषि—'भाव, किमेवमनुचितं निजेऽपि जने कथयितुमुचितम्' इति । सत्यमनुचितमेवेदं यत्त्वदनुभवरसिका द्युराज इति । यतः ।

जम्भारेरपि पाशपाद[8]तरुणीजाराज्जयन्तादपि
स्वैराश्लिष्टसुराङ्गनाकुचभराद्धन्यश्च मान्यश्च सः ।

---

१. 'तव' **क**-पुस्तके नास्ति. २. 'तरलभावः' **ख-ग.** ३. 'नानाविधं' **ख-ग.** ४. 'अस्या एव' **ख-ग.** पुस्तकयोर्नास्ति. ५. 'कमलकासार' **ख-ग.** ६. 'कामिनां नामधेयं' **ख-ग.** ७. 'इतरत्' **ख-ग.** ८. 'पद्मपाद' **ख-ग.**

रम्भाकेलिकुतूहलापहरतारम्भाधिकप्रौढया
पुंभावं गतया त्वया जगति यो रम्भोरु संभाव्यते ॥ १०७ ॥

सखि, किं ब्रवीषि—'भाव, केवलं सुरतरङ्गिणीरिङ्गद्भङ्गुरतरङ्गसंगतवचोभङ्गिभिरेव मामुत्तुङ्गयसि । न पुनरनङ्गविलासनटनरङ्गैरङ्गैः' इति । सखि, मा मैवं वादीः[1] । तर्हि सायमायास्यामि । (पदान्तरं गत्वा सदृष्टिक्षेपम् ।) कथमग्रत एव मुदमुदञ्चयति चन्द्रमुखी ।

क्रीडोत्क्षिप्तभुजामृणाललतिकापाशान्तराले बला-
द्बद्ध्वेन्दुं विरचय्य वैरिणमिदं वक्षोजकोकद्वयम् ।
हर्षादुन्नमतीव वारिजदृशो वक्षःसरोमण्डला-
न्निद्राभङ्गनिरूढजृम्भणजुषो मुग्धाङ्गभङ्गोत्सवे ॥ १०८ ॥

(अन्यतो विलोक्य ।)

वक्षोजौ निबिडं निरुध्य सिचयेनाकुञ्च्य मध्यं शनैः
कृत्वा चम्पकतैलसेकमबला संपीड्य मन्द ।शरः ।
पाणिभ्यां चलकंणोद्यतझणत्कारोत्तराभ्यां करो-
त्यभ्यङ्गं परिपश्यतोऽस्य चपलं दोरन्तरं प्रेयसः ॥ १०९ ॥

(कतिचित्पदानि गत्वा । सानन्दम् ।) इदमिह

जानुभ्यामुपविश्य पार्ष्णिनिहितश्रोणीभरा प्रोन्नम-
द्दोर्वल्ली नमदुन्नमत्कुचतटी दीव्यन्नखाङ्कावलिः ।
पाणिभ्यां चलकंकणोद्यतझणत्कारावतारोत्तरं[2]
बाला नह्यति किं निजालकभरं किंवा मदीयं मनः ॥ ११० ॥

मच्चेतसा सह भुजद्वयमुन्नमय्य
धैर्येण मे सममसाववधूय भूयः ।
बध्नाति कुन्तलभरं कुटिलान्तकेशी
साकं ममैव कथमद्य विलोचनाभ्याम् ॥ १११ ॥

(उपसृत्य ।)

कमलाक्षि विलम्ब्यतां क्षणं कमनीये कचभारबन्धने ।
दृढलग्नमिदं दृशोर्युगं शनकैरद्य समुद्धराम्यहम् ॥ ११२ ॥

---

१. 'वादीः' ख-ग-पुस्तकयोर्नास्ति. २. 'पाणिभ्यामवधूय कंकणझणत्कारावतारोत्तरं' ख-ग.

अनादरमिव किं ब्रवीषि—'कात्र भवन्तमाकारितवती' इति । (सानुनयम् ।) कल्याणि, कथमनालोक्यैव मामभिक्षिपसि । पुनः किं ब्रवीषि—'किं त्वामालोक्य भाग्यमुपगन्तव्यम्' इति । अयि, नास्ति किमपि किं मयि । किं ब्रवीषि—'नास्त्येव ।

चौर्येणैव कृतं हि कुक्षिभरणं जन्मप्रभृत्यन्वहं
गोपीनां पणदानशून्यसुरतक्रीडाऋणं चेत्पुनः ।
दुर्वारं तव जन्मकोटिभिरपि त्वं कृष्ण तत्तादृशः
किं मे दास्यसि किं तवास्ति च वयं किं वा ग्रहीष्यामहे ॥११३॥'इति।

मुग्धे, न जानासि ।

नित्यं श्रीरनपायिनी मम परं धामापि रत्नाकरः
शक्रादीनतिशेरते च विभवैर्भृत्यास्तदास्तामिदम् ।

किं चान्यत् ।

ऐश्वर्यं महदस्ति षड्गुणम्

किं ब्रवीषि—'क्व तद्दर्शय' इति ।

इह प्रख्याप्यतां तत्कथं

पुनः किं ब्रवीषि—'किमिति न प्रख्यापनीयं' इति ।

प्रच्छन्नोऽद्य किलास्मि तन्वि समये सर्वं त्वमेवैष्यसि ॥११४॥

(विहस्य ।) किं ब्रवीषि—'यां कांचिदेवं वञ्चय चञ्चलदृशम् । मम तु जातुचिदपि पुरो मैवं वादीः' इति । (स्मित्वा ।) अद्य यद्यपि मद्वचनं न रोचते तदा त्वमेव पुनः स्मरिष्यसि । (इत्यन्यतो गत्वा सस्पृहमालोक्य ।) कथमिहालंकरोति लवङ्गिका कनकाङ्गीम् । तथाहि ।

निबिडानुषक्तकुचकोकदंपती मुखतारकापरिवृढेन शासितुम् ।
अवतारितेव निजतारकावली हरिणीदृशः स्फुरति हारवल्लरी ॥११५॥

(उपसृत्य ।) अनया तावदिदानीम्

आत्मनैव विधृतापि मुग्धया हारयष्टिरधरांशुपाटला ।
विद्रुमावलिधिया विलोलया दृश्यतेऽपि परिमृश्यते मुहुः ॥११६॥

---

१. 'स्थित्वा' ख-ग. २. 'पुरः' ख-ग. ३. 'अग्रतो' ख-ग. ४. 'निबिडनिषक्त' ख-ग.

(लवङ्गिकामालोक्य ।) कथं कनकाङ्ग्या अप्यङ्गेषु भूषणान्यर्पयसि ।

जेतुं कल्पलताशिल्पमा कल्पं सखि कल्पताम् ।
अकल्पा कल्पकल्पे ते वपुष्याकल्पकल्पनाम् ॥ ११७ ॥

(साकूतम् ।) किं ब्रवीषि—'देव, अदो ज्जेव आहरणाइं अप्पयिस्सम् ।
अङ्गेसु लावण्णतरङ्गएसु णिसग्गसोहग्गसमग्गदेसे ।
देट्ठूण लोअस्स अ लोअणाइं णं संकिदा भूसणमप्पइस्सम्(?)११८'(क)इति।
अयि, कुशलासि । यतस्त्वमस्याः

अङ्गकान्यपिदधासि नताङ्ग्या भूषणैर्जनदुरीक्षणभीत्या ।
चञ्चलाक्षि, पथि चम्पकवल्ल्याः पल्लवैरिव परं कुसुमानि ॥ ११९ ॥

(क्षणमात्रं निर्वर्ण्य ।) अयि, विफलोऽयं तवायासः ।

अङ्गानामपिधानमाकलयसे मुग्धे मुधा भूषणै-
र्मज्जन्त्यत्र तु भूषणानि सुतनोरङ्गप्रभास्रोतसि ।
लीलासु श्रवणोत्पले नयनयोः स्मेरे च हारावली
लाक्षाश्रीः पदपाटलिम्नि तनुमा सीमासु हेमाम्बरम् ॥ १२० ॥

(पुनर्निर्वर्ण्य ।) अस्याः

कर्णान्ततान्तनयनान्तविलोकनश्री-
संछादितश्रवणपूरसितेतराब्जम् ।
मन्दस्मितद्युतितिरोहितचारुनासा-
मुक्ताफलं वितनुते वदनं मुदं नः ॥ १२१ ॥

(सानुरागं सपुलकोद्भेदं च विभाव्य ।) अयि प्रेयसि, किं करोमि ।

पद्मेन्दीवरकुन्दचम्पकजपाजातीपु जातस्पृहं
क्रीडाकाञ्चनशैलतुङ्गशिखरारोहावरोहालसम् ।

---

(क) देव, अत एवाभरणान्यर्पयिष्ये ।
अङ्गेषु लावण्यतरङ्गितेषु निसर्गसौभाग्यसमग्रदेशे ।
दृष्ट्वापि लोकस्य च लोचनानि न शङ्किता भूषणमर्पयिष्ये ॥

१. 'हारावलिः' ख.

मार्गे प्रस्खलितं क्रमेण विषमे मग्नं सरोमण्डले
पर्यन्ते पुलिनस्य कान्तकदलीमूले मनो मुह्यति ॥ १२२ ॥

लवङ्गिके, किं ब्रवीषि—'उइदं खु पिदुणो तणअस्स सअणाणुवत्तणम्'(क) इति । (स्वगतम् ।) कथमनया निर्लज्जयेवाभिहितम् । (प्रकाशम् । सरोषलज्जं [1]क्रीडाकमलेन लवङ्गिकां ताडयन्ती ।) किं ब्रवीषि—'हञ्जे, कथमपास्तलज्जा त्रासाद्दुरक्षराणि प्रलपसि' इति । लवङ्गिके, सधैर्यं किं ब्रवीषि—'सामिणि, पढमप्पलाविणं णं उज्झिअ कधं मइ जेव्व कुप्पसि' (ख) इति । (सस्मितम् ।) अयि, मय्यपि कुप्यतु नाम तव स्वामिनी । किमत्र परिहीयते ।

प्रत्यासीदति रोषतो[2] यदि मुखामोदस्तदा लभ्यते
बाहाबाहिरणे तु कर्कशकुचाश्लेषः स्वयं सिध्यति ।
मामुत्तानमधो निपात्य मयि चेदारोहतीयं ततो-
ऽप्यन्यत्किं मम काङ्क्षितं तदधुनैवालं द्रुतं कुप्यतु ॥ १२३ ॥

(श्रवणमभिनीय ।) क एष कलकलः पौरबालकानाम् । (पुरस्तादवलोक्य । सोपहासम् ।) सखि, पश्य पश्य । अयं किल कपटपुण्याहशान्तिबलिहोमविधिविलिप्तविविधचन्दनविकृतललाटतटघटितहरिद्राक्षतो वञ्चितदासीजनदत्तपञ्चाङ्गुलनिकुञ्चितपुरातनपरिधानकल्पितोष्णीषपरिलम्बमानदशासहस्तपरिवेपदूषितवदनश्चञ्चलचेलाञ्चलकीलितमपि पञ्चाङ्गं पतनशङ्कया कुशतृणाञ्चितेन पाणिना पुनःपुनरामृशन्, सव्यांसगतपटच्चरभस्त्रिकाविवरगलितकतिपयमुद्गतिलतण्डुलग्रहणव्यग्राग्रकरः परिहासपरपौरबालकपरिवारमन्तरान्तरा दर्भमुष्टिना दण्डेन निवारयन्, चिन्तोपचितांश्चिरंतनानप्यात्मसदनव्यापारानात्मनैव प्रकाशमालपन्वेशवाटिकापुरोहितो गणदत्तमातुलो वराहभट्टश्चन्द्रिकागृहादायाति । (सहासम् ।) किं ब्रवीषि—'अहो, का-

(क) उचितं खलु पितुस्तनयस्य सदनानुवर्तनम् ।
(ख) स्वामिनि, प्रथमप्रलापिनमेनमुज्झित्वा कथं मय्येव कुप्यसि ।

१. 'क्रीडाकमलेन' क-पुस्तके नास्ति. २. 'रोषिता' ख. ३. 'पुरातनपट्टदशासहस्त' ख. ४. 'गतपट्टिकाविवर' ख. ५. 'व्यग्रकरः' ख. ६. 'परिहासी' क.

लस्य वैचित्र्यम् । अयमिहैवैतावतो वासरांश्चेटीकुटीरकोटरकोण एव नक्तंदिवमप्यतिवाह्य पुनरद्य पलितपरिहते शिरसि वैदिकपद्यामनुरुध्य प्रत्यहं प्रातरुदकोपस्पर्शनमिव नित्यकर्मविधानमिव किमपि[1] कुर्वन्ननतिचिरादेव सदवनीदेव इव संवृत्तो वराहभट्टः' इति । न केवलमयमेव । अस्य भार्यापि ।

प्रागतीतमिह किं विविच्यतां कामशासनबलेन कारितम् ।
यौवनापसरणानन्तरं सर्वथा ननु पतिव्रतैव सा ॥ १२४ ॥

(पुनर्विलोक्य ।) कथमयं प्रत्यासन्नो भूत्वा पञ्चाङ्गं वाचयति । (श्रुत्वा सहासम् ।) सखि, पश्य ।

पञ्चाङ्गमञ्चितकुशेन करेण धृत्वा
पङ्क्तिं प्रमृज्य किल पत्ररसेन भूयः ।
आवर्तयन्नसकृदक्षरमेकमेकं
तारादि वाचयति तत्पुनरन्यदन्यत् ॥ १२५ ॥

तदेनमसंबद्धप्रलापिनमालापयन्ती[3] तिष्ठ । साधयामि । (परिक्रम्य पुरोऽवलोक्य च ।) कथमत्र मयूरकः । (उपगम्य ।) अपि कुशलं प्रियसखस्य । किं ब्रवीषि—'कुतः कुशलं भग्नभागधेयानाम्' इति । (सोद्वेगमात्मगतम् ।) कथमयं किमप्यरुंतुदं कथयिष्यति । अथवा परिहासशीलस्य वचोऽस्य[4] न विश्वसनीयं भवति । (प्रकाशम् ।) कथमद्य तवाकुशलम् । किं ब्रवीषि—

'कुटिलचिकुरा कुन्दस्मेरा कुरङ्गविलोचना
कमलवदना कम्बुग्रीवा कठोरपयोधरा ।
कनकलतिकाकान्ता कान्ता कराङ्कगता गता' इति ।

(विहस्य ।) सत्यमिदमकुशलं यदतिचिरनिबद्धघोटकब्रह्मचारिणस्तव कामिनीरत्नं करतललग्नम्' इति । (सरोषविषादम् ।) किं ब्रवीषि—'कथमर्धोक्त एवाक्षिप्य परिदेवनावसरे परिहसति वयस्यः' इति । तर्हि कथय कथय ।

१. 'किमपि किमपि' क. २. 'तदेवमप्यसंबद्ध' ख. ३. 'आलपन्ती' ख. ४.'अस्य' ख-पुस्तके नास्ति.

किं ब्रवीषि—कराङ्कगता गता' इति । (विमृश्य ।) तर्हि । कठिनहृदयः कामम् । किं ब्रवीषि—'वयस्य, किं त्वया वक्तव्यमिदम् । कठिनहृदय एवाहं योऽयं प्राणवल्लभाप्रयाणेऽपि[1] प्राणिमि' इति । (स्वगतम् ।) कथमयमन्यथा मन्यमानो मन्युमेव प्रविशति । (प्रकाशम् ।) सखे, किं त्वां कठिनहृदयं ब्रवीमि । किंतु ।

कठिनहृदयः कामं कामः कथं कुशलं तव ॥ १२६ ॥'

इति वक्तुं प्रवृत्तोऽस्मि । किं ब्रवीषि—'वयस्य' अहमप्येतदेव

कुटिलचिकुरा कुन्दस्मेरा कुरङ्गविलोचना
कमलवदना कम्बुग्रीवा कठोरपयोधरा ।
कनकलतिकाकान्ता कान्ता कराङ्कगता गता
कठिनहृदयः कामं कामः कथं कुशलं मम ॥ १२७ ॥

इति वक्तुं प्रवृत्तोऽस्मि' इति । (सचमत्कारम् ।) तदावयोरेकमेवान्ततो[2] विवक्षितं संवृत्तम् । उक्तिप्रत्युक्तिकया त्वन्ततोऽप्यतर्कितं संविधानवैचित्र्यं संपन्नं भवतु । कोऽत्र विरोधः ।

'का सा कनकवर्णाङ्गी त्वत्कराङ्कगता गता ।'

किं ब्रवीषि—

'सखे सौदामिनी नाम कान्ता कादम्बिनीस्नुषा ॥१२८॥' इति ।

जानामि सकलजननयनहारिणी खलु तदीयतनुरुचिधोरणी । कथं सा करतलगता । कथं च पुनर्गता । किं ब्रवीषि—'सखे, चिरादपि तत्संगमायान्विष्यन्त[3] एव तावदुपायाः । पुनरतीते निशीथे निबिडान्धकारमगारपरिसरमधितिष्ठता मया बहिरागता सौदामिनी सरभसं करेण गृहीता' इति । धीरोऽसि । तदा तया किं व्यवसितम् । किं ब्रवीषि—'न किमपि । क्षणमात्रमवस्थिता 'धिङ् मूर्ख, मुञ्च मुञ्च' इति मामवधूय पुनरगारं प्रविष्टा । अहमपि कुक्कुटकूजितावधि तदागमनाशयैव स्थित्वा तदनन्तर-

---

१. 'प्रहाणे' ख. २. 'तु कुतोऽपि' ख. ३. 'अन्विष्यतैवोपायान्' ख.

मागतोऽस्मि' इति । भवतु । वयस्य, यदा कदापि किं तथा कथितपूर्वमङ्गी-कारवचनम् । किं ब्रवीषि—'कथम[1]पूर्वं कथ्यते । यतः ।

संलापे सिचयग्रहे कुचतट[2]स्पर्शेऽधरास्वादने
नीवीविश्लथने च किं नु बहुना काले च तस्मिन्नपि ।
जल्पन्त्यप्रकटं निषेधवचनान्येवासकृत्कर्णयो-
रङ्गीकारवचः पराम्बुजदृशां केन श्रुतं कथ्यताम् ॥१२९॥' इति ।

सखे, न जानासि ।

पराङ्गनानां सुरताभ्यनुज्ञा मन्दोदिता एव निषेधवाचः ।

किं ब्रवीषि—'[3]किमिदमहं न जानामि ।

क्रीडानिषेधोक्तिमयी यदासां निषेधगाथाप्यत एव शास्त्रे ॥१३०॥

परंतु न तेषामपि निषेधवचसामवसरो लब्धपूर्वः' इति । कथमविदिता-शयामनुवृत्तोऽसि । किं ब्रवीषि—'अस्ति [4]किंचिदनुरागबीजम् । तथाहि ।

सव्याजं सदनं समेयुषि मयि श्वश्रूसमक्षं तया
व्रीडामीषदिवाभिनीय शनकैरुत्थाय यान्त्या बहिः ।
यत्किंचिद्व्यपदिश्य सामिवलितग्रीवं पुनर्वीक्षितं
तन्वङ्ग्या' इति ।

(सशिरःकम्पम् ।) विश्वसनीयमिदमनुरागबीजं भवति । किं ब्रवीषि—
'तत एव तत्र सुदृशि खिद्यामि मुह्यामि च १३१' इति ।

यद्येवमद्य श्वो वा भविष्यति युवयोरपि मन्दाकिनीमरालयोरिव विनैवायासं समागमः । किं ब्रवीषि—'कथमिव तयोर्व्यतिकरः संवृत्तः' इति । शृणु ।

अन्योन्यं [5]ललितैरपाङ्गवलनैराविष्कृताकूतयो-
रौत्सुक्याकुलयोः कथं कथमिव प्राप्तक्षपामध्ययोः ।

---

१. 'पूर्वं' ख. २. 'तटी' ख. ३. 'किमिदमहं न जानामि' ख-पुस्तके नास्ति. ४. 'किंचन' ख. ५. 'चलितैः' ख.

दैवादायतने क्वचिन्मिलितयोः साशङ्कमुत्ताम्यतो-
श्चेष्टाचैरभिजानतोरथ तयोरासीदनङ्गोत्सवः ॥ १३२ ॥

तत्किंचित्कालं सोढव्यो विरहवेगः । किं ब्रवीषि—'कथं सोढव्यो-ऽप्रतीकारोऽयं मदनशरसंतापः' इति । ननु प्रेयसीचिन्तयैव प्रतिक्रियताम् । किं ब्रवीषि—'सखे', प्रतितलमपि चिन्तयामि ।

कथं कामेषुदलितमङ्गमङ्गात्रणं भवेत् ।
प्रिया[1]गुणानुसंधानसंधानकरणी न चेत् ॥ १३३ ॥

तदपि संतापयत्येव संताप इति । वयस्य, अद्भुतमनङ्गहतकस्य चरितम्

निःसारं क्रमशो धनुः प्रतितरुः किं मार्गणैः किं गुणै-
र्मन्दं स्यन्दति वा न वा तरुलतागुल्माहतः स्यन्दनः ।
लीनं पाथसि यस्य लक्ष्म च परं निर्दग्धमूर्तिः पुनः
सर्वाङ्गीणमहो तनोति स कथं संतापमद्य स्मरः ॥ १३४ ॥

(पदान्तरं गत्वा । अग्रतो दृष्ट्वा च ।) सखे, पश्य पश्य । किं ब्रवीषि—'मया[2] सांप्रतमालोकनीयानामतिरमणीयानामाकृतीनां परं पारमालोकितमेनामा-लोकयता । मन्ये च तावदित्थम् । अस्याः

लावण्याम्बुनिधौ स्मरेण मथिते रोमावलीभोगिना
निक्षिप्य स्तनमन्दराद्रिशिखरद्वन्द्वं कुरङ्गीदृशः ।
जातं लोचनवीचिकासु गरलं बिम्बाधरे चामृतं
तेनाद्यं विदधाति तापमपरं तूज्जीवनं कामिनाम् ॥ १३५ ॥

किं च ।

अधरे पल्लवरागो विटपसमाश्लेषविभ्रमो[3] बाह्वोः ।
अस्या भुजंगभोगप्रागल्भ्यं स्फुरति किं च रोमाल्याम् १३६' इति ।

(पुनर्विलोक्य[4] ।)

स्तनाभोगो मध्यं तरलयति तावद्गुरुतया
पृथुश्रोणीभारश्चलनमपि रुन्धे चरणयोः ।

---

१. 'प्रियानुगुणसंधानसंजीव' ख. २. 'संप्रति मया सांप्रतं' क. ३. 'विश्रमो' क. ४ 'पुनर्निर्वर्ण्य' ख.

करालम्बं दातुं तदपि बत नासीदति सखी
कथं कल्याणीयं मदभिमुखमुत्तिष्ठति हठात् ॥ १३७ ॥

किं ब्रवीषि—'कथमियं वयस्यमालोक्य चिरपरिचयसमुचितप्रणयेव सविनयमुत्तिष्ठति' इति । अथ किम् । इयमङ्गराजामात्यस्य कलानिधेः कलत्रं चन्द्रिका नाम । किं ब्रवीषि—'केन पुनरनवद्याङ्गी गणिकापद्यामवतारिता' इति । ननु भगवता भावजेनैव । किं ब्रवीषि—'युक्तमाह वयस्यः ।

विसदृशघटनाकुटिलं पङ्कजयोनिं चिराय परिभूय ।
करुणाशाली कामः कान्तानां कान्तमनुगुणं कुरुते ॥ १३८ ॥

भवतु । तदियं वयस्येन गणिका सती परिगृहीता, किं वा कुलाङ्गना सत्येव' इति । (सावज्ञम् ।) किं गणिकाजनं गणयति साधारणो भुजंग इव तव प्रियसखो भुजंगशेखरः । किं ब्रवीषि—'एवमेतत् ।

क्व पणावधिकं प्रेमनदनं पण्ययोषिताम् ।
पल्लवेषु परस्त्रीणां क्व च नैसर्गिको रसः ॥ १३९ ॥

किं च ।

शीलं नाद्रियते कुलं न मनुते नैवानुरुन्धे गुरू-
न्नारीणां कुलदेवता किल पतिस्तं चाप्यहो मुञ्चति ।
किं ब्रूमः परयोषितः पुनरसावन्योऽनुरागक्रमः
स्वप्राणानपि जातुचिन्न गणयत्येषा विटार्थे यतः ॥ १४० ॥' इति ।

वयस्य, पणाशयैव परिभूयते गणिकाजनगौरवम् । न चेदेवं तदा

अशङ्कितनखक्षतं पुनरलज्जमुक्ताम्बरं
प्रवृत्तकरणक्रमं प्रचुरचुम्बनाडम्बरम् ।
सशब्दकरताडनं सपरिहाससंभाषणं
न कस्य सुरतं मनो हरति वामवामभ्रुवाम् ॥ १४१ ॥

१. 'नासीदिति' क. २. 'भुजंगेश्वरः' क. ३. 'पणोपाधिक' ख. ४. 'मुक्ताम्बरप्रवृत्त' क.

(उपसृत्य । भुजं प्रसार्य ।)

आस्यतामास्यतां तावदुपचारैरलं प्रिये ।
क्वासौ गुरुकुचाभोगः क्वेदमुत्थानसाहसम् ॥ १४२ ॥

(इति हस्ते गृहीत्वोपवेश्य ।) सखि, चिराय रूपानुरूपमनुवृत्तं वारवनितावृत्तम्[1] । किं ब्रवीषि—'भाव, किमेतावता संवृत्तम् । विचारयतु भवानेव ।

वल्लरीपु मधुपेन वल्गता पद्मिनी न परिभुज्यते यदि ।
किं फलं कितव सौरभश्रियः कर्दमादपि कथंचिदुत्थितेः ॥१४३' इति ।

सखि, त्वदेकायत्तचित्तमपि मामन्यासक्तं संभावयसि । ननु[3] नक्तंदिनमपि

यत्तावत्पतिबाहुपाशवलयं विश्लेष्य[2] निश्यागतं
यत्कर्णे कथितं रहस्यमितरावेद्यं च हृद्यं पुनः ।
यच्चाप्यस्खलदिन्द्रनीलवलयं गाढं त्वयालिङ्गितं
तन्मे तामरसायताक्षि नितरामावर्तते चेतसि ॥ १४४ ॥

किं चान्यदपि कथयामि । स्मरतु सखी ।

चिरं पत्या नक्तं मयि कृतकसल्लापिनि गृहे
बहिर्व्याजाद्गत्वा सुमुखि निवसन्त्यां त्वयि पुनः ।
मया निर्यातेन स्मितरुचिनिरस्ते तमसि य-
त्तदा वक्त्रं पीतं स्फुरति तदिदानीमिव तव ॥ १४५ ॥

मयूरक, किं ब्रवीषि—'वयस्य, धन्यः खलु भवान्, यत एवमुदीरयन्ति पल्लवतल्लजाः ।

पतिं मुक्त्वा निद्राशिथिलभुजबन्धं चलितया
कपाटं निःशब्दं लघु विवृतवत्या मृगदृशा ।
क्वचित्कोणे लीनो घनतमसि सांकेतिकगिरा
समाहूतः स्वैरं विहरति तया कोऽपि सुकृती ॥ १४६ ॥' इति ।

१ 'वारवनितावृत्तम्' ख-पुस्तके नास्ति. २. 'विश्लेषयित्वा गतं' ख. ३. 'अपि' क.

सखि, सव्रीडविलक्षं[1] किं ब्रवीषि—'अतएव भवता लघुतामानीता-सि'[2] इति । (स्वगतम् ।) कथमियमुपालम्भगर्भवचनसंदर्भेण मामधिक्षिपति । तदेनामन्यतो नयामि । (प्रकाशम् ।) सखि, का[3] सा कन्दुकक्रीडाकलित-कौतुकाक्रान्ता कान्ता । किं ब्रवीषि—'इयं ममैव मातृष्वस्रेयी मल्लिका नाम । मत्कृतस्नेहानुबन्धा बन्धुजनमतिसंधाय मामनुसंगता वर्तते' इति । (सानन्दम् ।) इदमपि ममैव भागधेयम्, यत्करगलितामिव काञ्चनोर्मिकामे-कामेव त्वां विचिन्वता मौक्तिकमालिकेव पुनरियं मल्लिका मया त्वया समं समासादिता । तदधुना यदि न कुप्यसि, किंचित्पृच्छामि । किं ब्रवीषि—'पृच्छ' इति । (सानुरागम् ।)

उन्मीलत्पुलकं कपोलतलयोरुद्भ्रान्तमीषद्भ्रुवो-
रालोलं नयनान्तयोर्मयि पिबत्यास्यं प्रवालाधरम् ।
व्याधूतारुणपाणिकङ्कणरवव्यामृष्टमस्या[4] वचो
मा मा मुञ्च विमुञ्च मामिति मनः श्रोतुं समुत्कण्ठते ॥१४७॥

(सस्मितम् ।) किं ब्रवीषि—'त्वमेव तावदीप्सितमिमां पृच्छ, स्वयमेव सा कथयति' इति । भवतु तावत् । इमामालापयामि । (मल्लिकामालोक्य ।) अयि[5],

पतन्नपि पयोजाक्षि पादमूले तवासकृत् ।
कन्दुकः[6] करलग्नोऽयमिति संताड्यते कथम्[7] ॥ १४८ ॥

किं ब्रवीषि—

'पतितमपि पादमूले पश्चादुत्पतनशीलमविलम्बम् ।
कन्दुकमपि[8] कापुरुषं करतलग्नं न ताडयेत्का वा ॥ १४९ ॥' इति ।

अयि, किमेतावता हीयते ।

तरुणीपदपल्लवप्रहारं तरुणानां[9] परमं वदन्ति भाग्यम् ।
परिपाटलतत्करप्रहारः परिभावः किमयं वरोरु तेषाम् ॥ १५० ॥

मयूरक, किं ब्रवीषि—'सखे, कथमस्याः कुलक्रमागतगणिकाक्रमाया इव

१. 'वैलक्ष्यं' ख. २. 'आनीताः स्म' इति ख. ३. 'कासौ' ख. ४.'व्याख्यातं' ख. ५. 'अये' ख. ६. 'कन्तुकः' ख. ७. 'पुनः' ख. ८. 'कन्तुकं' ख. ९. 'तरुणा ये' क.

प्रत्यग्रगणिकाया अपि न लज्जाकणिका' इति । सुतनु, किं ब्रवीषि—'भाव, कुञ्जरमारुह्य किमिति कुटिलद्वारपथेन गन्तव्यम्' इति । (सबहुमानम् ।) साधु मल्लिके, साधु । सखे, किं ब्रवीषि—'नैवं खलु वक्तव्यम् । किंतु कथं वराहमारुह्य पुरीषं निषेद्धव्यम्' इति । मल्लिके, त्वमपि किं ब्रवीषि—'अरे मयूरक, कुलत्थयूपार्थिनस्तव कुतो मन्दुरातुरगाधिकारः । गच्छ गच्छ । किं दाता किमदाता वा त्वम्' इति । सखे किं ब्रवीषि—'कथमियं गणिकाया जननीव कथयति दुरक्षराणि । (अपवार्य ।) सखे, विरम विरम । कुटिलान्तरङ्गाः खलु कुरङ्गाक्ष्यः । किं ब्रवीषि—'कुटिलतरान्तरङ्गा इति वक्तव्यम् । किं च ।

किं ब्रूमहे कुटिलतीक्ष्णकठोरभावा
नाङ्गेषु[1] मान्ति सुदृशां किमुतान्तरङ्गे ।
यत्तावदाद्यमलकेषु दृशोर्द्वितीय-
मुज्जृम्भते तदितरत्कुचकुम्भयोश्च ॥ १५१ ॥

भवतु । चन्द्रिकामालोक्य सोढव्यम्' इति । चन्द्रिके, किं ब्रवीषि—'मयूरक, त्वयि किंचित्प्रथममुदितमविनीतं[2] तदनु यौवनमददुर्ललितायामस्यामपि किंचिदुदञ्चितम् । किमेतावता । पश्यतु कन्दुकक्रीडाचातुर्यमस्याः पल्लवपाणेः । अयि मल्लिके, मुधा मा कृथाः कलहं परिहासकुतुके मयूरके । विहर तावत्कन्दुकेन' इति । (सहर्षमात्मगतम् ।) दिष्ट्या मल्लिका-मयूरकौ समीकृतवती चन्द्रिका । (प्रकाशम् ।) सखे, पश्य पश्य ।

गुणिनमपि[3] सुवृत्तं कन्दुकमालोक्य ताडितं तन्व्या ।
परिनृत्यति कुचभारः

किं ब्रवीषि—

'कर्कशवृत्तस्य कुत्र कारुण्यम् १५२' इति ।

वयस्य, दीयतामितो दृष्टिः, यत्र शुकमालापयति शुकभाषिणी । (इति विलोक्य सकौतुकम् ।)

---

१. 'श्वाङ्गेषु यान्ति' क. २. 'उदीरितं विनीतम्' क. ३. छन्दोभङ्गदूषितोऽयमार्याप्रथमपादः.

आलापयन्त्याः शुकमायताक्ष्या मूर्ता मुखस्थाक्षरपङ्क्तिरेव ।
विलोक्यतेऽस्या विमले कपोले ताटङ्कमुक्तामणिबिम्बदम्भात् ॥ १५३ ॥

(श्रवणमभिनीय ।) कोऽयं कलकलः पौराणाम् । किं ब्रवीषि—'वयस्य, गत्वा निरूपयावः' इति । सखि, सावधानं तिष्ठ । (इति कतिचित्पदानि गत्वा पुरोऽवलोक्य सकौतुकम् ।) सखे, पश्य पश्य । अयमिह

पौराना कुलयन्बलं तत इतः पश्यन्पतत्यापणे
व्यग्रानापणिकान्विवृत्य वदनं वित्रासयन्गर्जति ।
पाणिभ्यां युगपन्मुखेन च मुहुर्गृह्णाति मुद्गान्यवा-
न्धावत्युत्पतति[1] प्लवत्यपि कपिः प्रासादमारोहति ॥ १५४ ॥

(सहासम् ।) किं ब्रवीषि—'प्रतिक्षणविलक्षणं खलु प्लवंगचेष्टालक्षणम् । पश्य ।

लीलाचङ्क्रमणैर्विटङ्कशिखरश्रेणीषु लोलं चर-
न्नासीनः क्वचिदूर्ध्वजानु कलयञ्शेफःसमुज्जृम्भणम् ।
व्रीडाकारिविचेष्टितैर्विनमयन्वक्त्राणि वामभ्रुवां
पौराणां पुरतश्चरन्प्रहसनं प्रस्तौति शाखामृगः ॥ १५५ ॥

(श्रवणमभिनीय ।) अयमिदानीं

नाडीभेदविभिन्नकालकलनाविज्ञानसंसिद्धये
दैवज्ञाभिहतादमन्दघटिकाघण्टामणेरुत्थितः ।
लोकानां श्रवणोत्सवं विरचयन्रुन्धन्क्रमाद्रोदसी
द्राघीयान्निनदः कदम्बमुकुलन्यायात्समुज्जृम्भते ॥ १५६ ॥

तदयं मध्याह्नसमयो वर्तते । (ऊर्ध्वमवलोक्य ।) सखे, पश्य पश्य ।

पादानुदग्रतरपर्वतमस्तकेषु
विन्यस्य सान्द्ररुचिरद्य सहस्रभानुः ।
अन्वेष्टुमन्धतमसं गहनेषु लीन-
मारोहतीति गगनाग्रमयं प्रतीमः ॥ १५७ ॥

---

१. 'उत्प्लवति' ख. २. 'कुतः' क.

किं ब्रवीषि—'मम तु पुनरेवं प्रतिभाति ।

कान्तारलीनमिव सन्तमसं विचेतु-
माकाशपादपशिखामधिरुह्य भानुः ।
भूयोऽप्ययं पतनभीत इवाखिलाशा-
शाखावलिं निजकरैर्युगपद्बिभर्ति ॥ १५८ ॥' इति ।

(समन्तादवलोक्य ।) अहो स्थावराणामपि शरणागतपरित्राणपरायणता ।
पश्य पश्य । (अङ्गुल्या दिनकरमण्डलं निर्दिश्य ।)

रोषादेष करान्प्रसार्य कुरुते संनाहमह्नांपति-
श्छायां नाशयितुं निजातपभयत्राणोद्यतामद्यताम् '

(पादपान्निर्दिश्य ।)

एते भूमिरुहास्तु पल्लवकरैः संरुध्य भास्वत्करा-
न्गोपायन्ति

किं ब्रवीषि—

न को नु वा परपरित्राणोद्यतं त्रायते ॥ १५९ ॥

परंतु छायापरिदालनं न पादपानां प्रशंसापदम् ।

ये पालयन्ति निरुपाधि फलादिभिः स्वैः
पान्थान्कुतोऽपि विषयात्कचन प्रयातान् ।
स्वाकारमेव दधतीं स्वशरीरजातां
छायां न पान्तु तरवः कथमातपात्ते ॥ १६० ॥' इति ।

(अन्यतो दृष्ट्वा ।)

कमलोदरमकरन्दं सपदि कदुष्णं विहाय सानन्दम् ।
मदशिशिरकरटपालीमिभकलभानामुपैति मधुपाली ॥ १६१ ॥

(कतिचित्पदानि गत्वा ।) इयमिह .

सिक्तं स्वेदपयोभिः सक्तं करजव्रणेषु चार्द्रेषु ।
सीत्कृतिसंकुचदधरं कञ्चुकमबला शनैरुदञ्चयति ॥ १६२ ॥

किं ब्रवीषि—'एवमेतत् ।

उच्चैरुन्नमनाद्भुजालतिकयोरुन्नम्रितौ पार्श्वयो-
रार्द्रानार्द्रनखव्रणाङ्कवलयावादर्शयन्ती कुचौ ।
बिभ्राणा चुबुकाञ्चलेन सिचयं बिम्बाधरापाटलं
कान्ता मुञ्चति निःसहातपपरिश्रान्ता शनैः कञ्चुकीम्[1] ॥१६३॥' इति ।

(पुनर्विलोक्य ।) कथमग्रत एव समुदग्रकनकदण्डकाण्डकलितपाण्डुरातपत्रपुण्डरीकमण्डलच्छायान्तरितघनातपा कापि कमलमुखी सखीकरमवलम्ब्य सलीलमभिमुखीभवति । (निर्वर्ण्य ।)

करैर्हारं हारं मुखपरिमलं मोहनदृशो
रुचां नेता नेता कमलममलं बान्धवमिति ।
रुषा छत्रछद्मा तिरयति रविं शीतकिरणो
दुरालोकं लोके[2] रिपुविभवमालोकयति कः ॥ १६४ ॥

(सप्रत्यभिज्ञम् ।) कथमियमसदपहृतकौमारा नातिचिरादेव समग्रयौवनावतारा तारा[3] । यतः ।

उद्भेदं प्रतिपद्य पक्वबदरीभावं समेत्य क्रमा-
त्पुंनागाकृतिमाप्य पूगपदवीमारुह्य बिल्वश्रियम् ।
लब्ध्वा तालफलोपमां च ललितामासाद्य भूयोऽधुना
चञ्चत्काञ्चनकुम्भजृम्भणमिमावस्याः स्तनौ बिभ्रतः ॥ १६५ ॥

(आलिङ्ग्य । आत्मगतम् ।)

अलं क्रोडीकर्तुं यदपहृतमप्यङ्गमभव-
द्भुजेनैकेनापि प्रथमपरिरम्भे मृगदृशः ।
तदेवाद्य प्रेम्णा गतमपि मदेकैकरसतां
न माति प्रोत्तुङ्गस्तनभरतया बाहुयुगले ॥ १६६ ॥

(प्रकाशम् ।) अयि[4], अपि नाम यदा कदाचन[5] स्मरसि भुजंगशेखरम् ।
(सोपालम्भम् ।) किं ब्रवीषि—'किमिति स्मरामि कितवाचारं भवन्तम् ।

१. 'कंचुलीम्' क. २. 'लोको' क. ३. 'तारा' क-पुस्तके नास्ति. ४. 'अयि' ख-पुस्तके नास्ति. ५. 'कदा वा' ख.

मायाविन्यतिकर्कशात्मनि दयादूरे मृषाभाषणे
मिथ्याबाह्यविडम्बनैकचतुरे श्रीकृष्ण किं मे त्वयि ।
आस्ते कोऽपि वियोगभीरुरनिशं कृष्णो ममान्तर्बहि-
र्यं पश्यामि च संलपामि च मुहुः श्लिष्यामि हृष्यामि च ॥ १६७ ॥' इति ।
(सहर्षमात्मगतम् ।) कथं वारयुवतिजातेरपि प्रेमभावबन्धुरं हृदयम् । (प्रकाशम् ।) सखि, जानासि ते साहजिकरागरमणीयं चेतः । भवतु । केयं पार्श्ववर्तिनी । यस्याः

किंचित्किंचिदुदञ्चतीव वलयाकारेण वक्षःस्थली
मन्दं मन्दमिवाधिरोहति वचोलीलाक्रमे वक्रिमा ।
स्तोकं स्तोकमिवाविरस्ति सरसव्रीडाविलासो दृशो-
र्वारं वारमवेक्षते च मदनो वस्तुं वराङ्ग्या वपुः ॥ १६८ ॥

किंच ।

पदमधरदले विधाय रागः प्रविशति संप्रति मानसं मृगाक्ष्याः ।
पतति कुटिलतापि कुन्तलेभ्यो विपुलविलोचनलोलवीचिकासु ॥१६९॥

किं ब्रवीषि—'भाव, इयं ममैव कनीयसी शशिरेखा' इति । (सप्रत्यभिज्ञानाश्चर्यम् ।) कथमेतावतैवानेहसा तावदियमियतीमाकृतिसंपदमधिगता । मम त्विमामालोकयतः

अव्यक्तवर्णमपि कर्णरसायनं य-
त्प्रायः स्खलत्पदमपि प्रियदर्शनं यत् ।
आभाषणं च गमनं च तदेव साक्षा-
दद्यापि मे भवति शैशववृत्तमस्याः ॥ १७० ॥

तदस्या अपि कौमारमहमेवापहरिष्यामि । मयूरक, किं ब्रवीषि—'विदग्धः खलु भवान्मुग्धाङ्गनाजनमनोरञ्जनकलासु' इति । यद्येवमङ्गीकरोति प्रेयसी तारा, तर्हि सफलं मे वैदग्ध्यम् । सखि, किं ब्रवीषि—'यदुपभुक्तशेषं किल तयापि भोक्तव्यम् । गच्छ गच्छ । कठोरातपेन पादनखंपचे-

१. 'प्रेमबन्धुरं' ख. २. 'सहजानुराग' ख.

पथि किं वृथालापेन' इति । तर्हि गच्छ । वयमपि पुरोद्यानवाटीं प्रविश्यातपमपनेष्यामः । सखे, पुरोद्यानपद्यां प्रदर्शय । किं ब्रवीषि—'इत इतः' इति । (परिक्रम्यावलोक्य च सकौतुकम् ।) कथमत्र सरसि मध्याह्निकस्नानमाचरन्ति महीसुराः । (विहस्य ।) किं ब्रवीषि—'अनवरतजडाशयपरिचयादेव नूनमेषां श्रोत्रियजनानां प्रतिदिनमतिशेते मतिजाड्यम् । किंच । सितासितसरित्प्रमुखमहातीर्थराशेरतिमहत्तरमिदं मरकतनामकं सरः पारलौकिकसुखसाधनमिति पौराणिककथामनुधावतामवनिसुराणामनिवारणीयमम्भोवगाहनव्रतम्' इति । ननु रहस्यविदामत्रैव सुखमस्ति । यतः ।

दरहासविलोकनापदेशान्मिलिते यत्र सितासिते तटिन्यौ ।
सुदृशां पुरतो विगाह्य तस्मिन्सुखमत्रैव भजन्ति केऽपि धन्याः ॥१७१॥

अन्यच्च ।

भृङ्गोत्पलाम्बुरुहकम्बुमृणालकोक-
शैवालवीचिसलिलभ्रमसैकतानि ।
यत्रेभहस्तकमठस्फुरितानि भान्ति
क्रीडन्ति तत्र रसिकाः सततं सरस्याम् ॥ १७२ ॥

किं ब्रवीषि—'सखे, दीयतामितो दृष्टिः ।

अम्बुसिक्तविमलाम्बरान्तराल्लिख्यमानजघनोरुमण्डलाः ।
उत्तरन्ति सरसोऽद्य बालिकाश्चितलोभकरसिद्धमूलिकाः ॥१७३॥' इति ।

(दृष्ट्वा स्मरणमभिनीय ।) वयस्य,

विमलसलिलासिक्तासक्ताम्बरप्रतिबिम्बितां
मुहुरवयवश्रेणीमेणीदृशां मम पश्यतः ।
स्मरति तदलं चित्तं व्यक्तं यदारचयन्पुरा
मुषितवसने मन्दं कुञ्जं गते मयि गोपिकाः ॥ १७४ ॥

पुनः किं ब्रवीषि—'इतोऽपि विततमलिनदलच्छायायां विकचराजीवराजीविरचितावतंसा राजहंसावली' इति । (निर्वर्ण्य ।)

---

१. 'गच्छ गच्छ' क. २. 'श्रोत्रियजडानां' क-पुस्तके नास्ति. ३. 'गाथा' ख. ४. 'कमल' ख. ५. 'मन्दं' क. ६. 'अपि' क-पुस्तके नास्ति. ७. 'विरचितनिवासा ख. ८. 'निर्वर्ण्य' क-पुस्तके नास्ति.

छायामायतनालपत्रकपटच्छत्रोदितामाश्रिता
कुर्वाणा निजपक्षपाति भुवनं कोशोदयामोदिनी ।
सानन्दं कविभाषितानि कलयन्त्याबद्धपद्मासना
लक्ष्मीं विन्दति राजहंसपरिपन्नामानुरूपामियम् ॥ १७५ ॥

(पदान्तरं गत्वा ।) इदमिदानीमविरलतरुनिकरनिवारितरविकरप्रवेशं रविकरप्रकाशचकितगुरुतिमिरशरणीकरणीयलतागृहप्रवेशं, क्वचन समुल्लसितशताङ्गमिव विकसदशोकशाखाभिः, क्वचिदुन्नतमातङ्गमिव निबिडतमतमालतरुभिः, क्वचिदुदारतुरंगमिव क्रीडाकुरङ्गैः, क्वचन वाचालबन्दिवृन्दमिव कलकलायमानकोकिलकुलैः, क्वचन पुरोत्तम्भितपताकमिव राजरम्भाभिः, क्वचिदुद्भ्रान्तकुन्तमिव केतकीप्रसूनैः, क्वचिदुद्यतकरवालमिव चूतप्रवालैः, क्वचिदुद्धृतातपत्रमिव शतपत्रैः, क्वचिदुद्धूतचामरमिव चपलकलहंसैः, क्वचिदुपनतगीतमिव मधुरमधुकरझंकारैः, क्वचिदुदञ्चितनटनचटुलवारनितम्बवतीनिकुरम्बमिव मलयानिलचलितललितलताभिः, क्वचिदुपरचितवितानमिव कायमानैः, क्वचिदुच्छ्रितपटमण्डपमिव कुसुमितलतानिकुञ्जैः समन्ततश्च कुसुमशरनृपशिबिरमिव पुनरनेन सकलेनापि स्फुरति पुरः पुरोद्यानम् । अपि च ।

मधुराप्सरोविलासा मधुरसकलनाकुलालिसहकारा ।
अक्षतरूपश्लाघ्या वनिताजनतेव भाति पुरवन्या ॥ १७६ ॥

किंच ।

अलिकलसदगरुतिलका चलदलकान्ता सुवर्णकृतमाला ।
तरुणवयोरमणीया तरुणीलीलां दधाति वनरेखा ॥ १७७ ॥

अन्यच्च ।

मृदुलवलिललितमध्यं पृथुलकुचं चारुविपुलभूजघनम् ।
पुंनागस्पृहणीयं स्फुरति वनं यौवनं च नारीणाम् ॥ १७८ ॥

१. 'दल' ख. २. 'क्वचिदुत्तम्भित' ख. ३. 'उपवन' क. ४. 'निकुरंबैः' क. ५. 'पुनः' क. ६. 'अपि च' ख.

(वनं प्रविश्य ।) सखे, पश्य पश्य ।

मन्दमन्दमुपगम्य मारुते मञ्जरीकुचकिशोरकस्पृशि ।
रागवत्यपि रसालवल्लरी पल्लवेन पिदधाति पाणिना ॥ १७९ ॥

(पुनर्विलोक्य ।) कोऽयमपरिशीलितसंनिवेश इव, आविष्ट[1] इव, मुक्तचैतन्य इव, मुषितेन्द्रिय इव, अनियतमितस्ततो विवशमेव कथंचन बलादात्मानं संचारयन्क्वचिदपि न विश्राम्यति' । (निर्वर्ण्य ।) किं ब्रवीषि—'वयस्य, कलहंसको मदनविह्वलः परिभ्राम्यति' इति । (उपसृत्य ।) वयस्य, किमितस्ततो भ्राम्यसि । किं ब्रवीषि—'किं करोमि ।

अत्राकारितमत्र चुम्बितमिहाश्लिष्टं च हृष्टं पुन-
स्तन्वङ्ग्यात्र विसृष्टमत्र शयितं चात्रैव संभाषितम् ।
इत्थं कुञ्जगृहेषु तान्तसुमनस्तल्पेषु वापीतट-
क्रीडासैकतकेषु च प्रतिपदं भ्राम्यामि ताम्यामि च ॥१८०॥' इति ।

कया गणिकया मुषितचेतनो मुह्यसि । किं ब्रवीषि—'आः, किमुच्यते गणिकयेति । नहि[2] गणिकाजनकामुकस्तव[3] वयस्यः । किंतु प्रभाकर-कलत्रस्य कमलिन्याः[4] कैरपि विभ्रमैर्विभ्रान्तस्वान्ततया मनागपि[5] नात्मनः प्रभवामि' इति । सखे, साधु साधु ।

उपरिप्लवस्वभावाः प्रायो गणिकाश्च तार्णकणिकाश्च ।
कथय कथं गाहन्तां रसिकानां मनसि सरसि च स्वरसात् ॥ १८१ ॥

मयूरक, सशिरःकम्पं किं ब्रवीषि—'सदृश एव कमलिन्यां कलहंसस्य रागानुबन्धः । अपि च तादृशमेव तदीयं सौन्दर्यम् । यतः ।

वीथीमुपैति यदि नाम विलासिनी सा
देवोत्सवादिदिवसेषु यदाकदाचित् ।
व्याजात्कुतोऽपि विनिवृत्य पुरोजुषोऽपि
पश्चाल्लगन्ति परिफुल्लदृशो युवानः ॥ १८२ ॥' इति ॥

---

१. 'भूताविष्टः' ख. २. 'कथं' ख. ३. 'ते' ख. ४. 'पद्मिन्याः कैरपि विलासैः' ख.
५. 'मनागपि' ख-पुस्तके नास्ति.

सखे, कलहंसक, कथय कथमनया सममनायासमत्रैवोद्याने मिलितोऽसि । किं ब्रवीषि—'कथमनायासमासाद्यते परकलत्रम् । शृणु तावत् ।

वीक्षाविभ्रमचेष्टितैरपि मनो विज्ञातुमेवाक्षमं
ज्ञातेऽप्यालपितुं न शक्यमथवा संभाषितापि क्रमात् ।
नेतव्या स्ववशं कथं वशमथानीतापि कृच्छ्रात्कचि-
न्निर्विघ्नं पुनरन्ततः परवधूरासाद्यते वा न वा ॥ १८३ ॥' इति ।

(आत्मगतम् ।) एवमेतत् । अत्रायं सौदामिनीकामुको मयूरक एवोदाहरणम् । अथवा मय्येव तिष्ठति भग्नभागधेये किमन्यगवेषणां । (प्रकाशम् ।) एवमेतत् ।

किमालापः स्वैरं क्षणमपि किमेकत्र वसतिः
किमाश्लेषो गाढं किमु हृदयतृप्तिः किमथवा ।
रतान्ते विश्रान्तिः किमिह परकीयासु घटते
तदप्याश्चर्यं नः परिपतति तास्वेव हृदयम् ॥ १८४ ॥

तत्कथमासादिता कमलिनी वयस्येन । किं ब्रवीषि—'तत्कृते मत्कृतायासो मासमेकं नक्तंदिनमपि कथ्यमानो न पार्यत एव । श्रुत्वा वा ततः किमस्ति प्रयोजनम् । फलितं तु कथयामि । सा खलु प्रथमावलोकनप्रभृति प्रकर्षेण वा प्राचीनपुण्यपरिपाकानाम्, अनुग्रहेण वा शुभग्रहाणाम्, आनुकूल्येन वा कुलदेवतानाम्, अनुरोधेन वा मधुमासवासराणाम्, दाक्षिण्येन वा दक्षिणानिलानाम्, गौरवेण वा कोकिलगुरूपदेशानाम्, महिमातिशयेन वा मधुमदचपलमधुव्रतविरुतमन्त्राक्षराणाम्, प्रभावेण वा प्रसवरजःसिद्धचूर्णानाम्, महत्तया वा मदनमहाराजविभूतीनाम्, किं बहुना स्वकीयेनैव परतापासहिष्णुना स्वभावतरलेन रसिकसमाजहृदयरञ्जनेन परप्रार्थनाभङ्गभीरुणा निसर्गसरसेन प्रकृतिविशेषेण वा क्रमेणास्य जनस्योपरि ग्राहितरागानुबन्धा बन्धूनपि श्वश्रूमपि श्वशुरमपि पतिमपि परिजनमप्यतिसंधाय कृतसमयबन्धा यदा यदा स्वयमेव मामभिगन्तुमुद्यतवती, तदा तदा नि-

१. 'हृदयसाहित्यमथवा' ख. २. 'स्निग्ध' ख. ३. 'महाराजाज्ञा' ख. ४. 'सरसेन' ख. ५ 'उद्युक्तवतां' ख.

ष्कारणवैरिणा सदृशसमायोगविघटनकुटिलेन परश्रेयोविघातकारिणा प्रकृतिदारुणेन करुणागन्धविधुरेण वात्सल्यकथानभिज्ञेन दुर्विदग्धेन विधिना बहूनपि वासरान्न केवलं विफलमनोरथा कमलिनी कृता, किंत्वसावहमपि शोकमनीकृतः । ह्यस्तने तु पुनरहनि गभस्तिमालिनि शनैरस्तगिरिमस्तकादवतीर्णे चरमार्णवमुपरि पाटलम्रमयूखमञ्जरीभिरिव रविपतनपरिक्षुभितजलधिजलोत्पतितवाडवशिखाभिरिव विरहिजनहृदयतार्णगृहवितीर्णपरिशिष्टमदनविसृष्टदहनहेतिभिरिव संध्यारागरुचिभिरापाटलेषु पयोदपटलेषु, दुर्विषहतदुष्णवेगासहिष्णुतयेव तारतरविरावमुखरमुखमभीक्ष्णकृतपक्षपुटविधूननं शिशिरकुसुमरसपरागपिहितनिजहितकुलायमहीरुहं गतेषु विहंगमेषु, तत्काल एव तदालोकनभयादिव श्रिया घटितदलकवाटेषु कमलवाटेषु, तत्कृतदुरन्तसंतापादिव संजातविस्फोटेषु, कुमुदमुक्तास्फोटेषु, समुत्तुङ्गतदङ्गारकणिकास्विव दर्शितावतारासु तारासु, गगनतलादलम्राभिरतिबहुलतया पुनरवगलन्तीभिस्तदुज्ज्वलकज्जलधूलिभिरिव तिमिरपालिभिराक्रान्तेषु दिगन्तेषु, विस्फारतदीयविस्फुलिङ्गेष्विव विद्योतितविपिनाङ्गणेषु ज्योतिरिङ्गणेषु, किंच विफलजनचक्षुषि विस्फुरितसकलतारकारोचिषि प्रवीयमानकौशिकदृगायुषि दूरदृश्यानलार्चिषि दूयमानचक्रवाकहृदयक्षुषि चञ्चरीकपरिपीयमानकुवलयमकरन्दविप्रुषि उद्वेलचकोरिकातृषि [illegible]षधिज्योतिषि उदग्रदीपिकात्विषि उद्बोधितकुसुमधनुषि [illegible]सीयमानसरसि प्रनष्टसंध्यारागतेजसि अपरिदृष्टचन्द्रमसि [illegible]कागहसि तस्मिन्ननेहसि, प्रबलतमःपटलकृतावगुण्ठनया केनचिदप्यलक्ष्यमाणो निभृतपदक्रमं क्रमात्प्रभाकरग्रहप्राङ्गणं प्रविश्य तस्मिन्नेव पूर्वकृतसंकेते स्नानगृहे न्यवसम्' इति । तर्हि संप्रदायज्ञोऽसि ।

---

१. 'संयोग' ख. २. 'सा विवाहमपि' क. ३. 'जठरोत्पतित' ख. ४. 'ग्रह' क. ५. 'पयोधर' ख ६. 'तदुत्थ' ख. ७. 'गमेषु' क. ८. 'तदा तदावलोकन' क. ९. 'विस्फोटासु कुमुदमुक्तास्फोटासु' क. १०. 'समुत्तरलदुत्तुङ्ग' ख. ११. 'विप्रुषि' क. १२. 'स्नाननिकेतने' ख.

स्नानालये वा ततनिष्कुटे वा गोष्ठेऽपि वा पुष्पकुटीरके वा ।
पराङ्गनाभोगपरेण यूना वस्तव्यमालोक्य विलोकशून्ये ॥ १८५ ॥

ततस्ततः । किं ब्रवीषि—'ततस्तस्या देवरस्तदेव गृहं गृहीतधूमवर्तिरङ्गारार्थी प्रविश्य समुपविश्य चुल्लीसमीपभुवि तत्रत्येनैव केनचित्प्लुष्टावशिष्टेन काष्ठेन गाढावनमितमूर्धा किंचिदुल्मुकमुज्ज्वलयन्, उपरि बद्धभस्मपरागमुत्सारयन्, वदनमरुता यावदेव दरदृश्यमानाङ्गाररुचिभिरगारतिमिरनिकरं मदीयधैर्यसारेणैव साकमपसारयति स्म' इति । हन्त अत्याहितमत्याहितम् । ततस्ततः । किं ब्रवीषि —'तावदेव मदुपकण्ठगते सलिलकलशे मयैव निपातिते तदम्बुपरिवाहविगाहनमसमयमेव सफूत्कारमुत्थितेन कदुष्णेन भस्मना युगपदेव नासानयनवदनविवरपातिना कमपि विकारमापादितः । तत्कालमेव कलशपतनचकितपलायमानगृहबिडालकं कलशपतनकारणं मन्यमानो मन्युना शपन्, काष्ठेन क्षिपन्, पक्ष्मपुटनासिकाधरश्मश्रूणि कराञ्चलेन परिमार्जयन्, नष्टहुताशनतया निराशो निर्जगाम', इति । (सहर्षम् ।) दिष्ट्या पुनरुज्जीवितोऽसि । ततस्ततः । किं ब्रवीषि—'गत्वा च पञ्चषाणि पदानि पुनरेव निवृत्य वामकरेण कवाटमाकृष्य बहिरायसकीलकेन बद्ध्वा निरगात्' इति । (सविषादम् ।) कष्टं कष्टम् । ततस्ततः । किं ब्रवीषि—'अथ कथंचन कंचिदिव समयं समवस्थितो मन्दं मन्दं कवाटपुटं विघटयितुमनेकधात्मानमायास्य नीरन्ध्रकृतबन्धनतया बहुभिरप्युपायैरशक्यविघटनमवधारयन्नचिन्तयम् । तदा खल्विदं कवाटबन्धनमकिंचित्करं भवेत्, यदि नाम सा प्रसीदति प्रेयसी कमलिनी । यदि च केनचिदन्तरायेणोपहन्यमानया तया सदनान्निर्गन्तुमेव न पार्यते, तदा पुनरत्र गाढकवाटबन्धे घनेष्टकारचितभित्तौ अभेद्योपरिपरिच्छदे संप्रच्छन्नानि दारुपञ्जरे बुद्धिपूर्वमात्मनैव निपतितस्य मम प्रभाते गृहपतिकरपतनमवश्यमसंशयमेव भविष्यति । कोऽत्र प्रतीकारः । को वा निर्गमोपायः । का वा युक्तिः । किं वा

१. 'कुञ्ज' ख. २. 'आलोकविलोक' ख. ३. 'उल्ललयन्' ख. ४. 'परिबद्ध' ख. ५. 'सह निःसारयति' ख. ६. 'सचूत्कारं' ख. ७. 'आस्थितो' ख. ८. 'भवति' ख. ९. 'दृढेष्टका' ख. १०. 'सद्मनि दारुण' ख.

शरणम् । कस्मै कथयामि । कथं गौरवं प्रतिपालयामि । कथं वा जनोपहासं परिहरामि । कथं वा बन्धुगृहेषु चरामि । कथमपनेतव्योऽपवादः । कथमवलोकनीया गुरवः । सर्वथा चोरं जारं वा व्यपदिशन्ति जनाः । किंच किमनुभूय महत्फलमेतावत्परिभवस्य भाजनतां नीतोऽस्मि, यदनुसंधाय सर्वमपि विस्मरामि । किं च ।

नालिङ्गितं घनपयोधरतुङ्गमङ्गं
नास्वादितं मधुरमप्यधरप्रवालम् ।
नाघ्रातमाननपयोरुहमप्यमुष्या
हन्ताधुनैव कथमापतितोऽन्तरायः ॥ १८६ ॥

इत्यादिकमामीलितलोचन[1]मेवाकलयन्कमपि पदशब्दमश्रौषम् । श्रुत्वा चोन्मीलितनयनो द्वारसंधिविवरप्रविष्टैरायामिभिरिन्दुकान्तमयकुन्तानुकारि[2]भिरर्धावमथितगेहान्धकारैरपरिस्फुटाकारविशेषमर्थजातमुपदर्शयद्भिरनतिबहुभिरिन्दुपादैरनुमितचन्द्रोदयसमयपरिमाणः साशं च साशङ्कं च कवाटविवरदत्तचक्षुरतिप्रौढचन्द्रातपतया निःशेषपरिस्फुटाकृतिं दरफुल्लमल्लिकादामवलितकेशकलापं शशिकिरणपाशपरिवेष्टितमिव तिमिरपटलं शिरसा धारयन्तीम्, सदनवनविहारचकोरकवलितचन्द्रिकातुच्छप्रदेशानच्छकपोल[3]कान्तिपूरैरापूरयन्तीम्, श्रुतिपथविलङ्घनजङ्घालविपुलविलोचनवसतिसीमाविभागहेतुना सेतुनेव नासावंशेनालंकृताम्, गृहदीर्घिकाविकासिकुमुदकुवलयावलेपसारमपसारयितुमिव तत इतो दिक्षु कटाक्षान्विक्षिपन्तीम्, जाम्बूनदाम्बरपरिपिहितावयवतया सहोदरीमोहमिलितयेव सौदामिनीलतया कृताश्लेषां विमलनखमणिप्रतिविम्बदम्भकृतपादपतनं वदनकमलपराजितं चन्द्रमसं पदक्रमापदेशेन पदे पदे विधूयावधीरयन्तीम्, गुरुकुचकुसुममञ्जरीमञ्जुलतनुलतापरिमलतरलपटीरपवमानमन्तरान्तरा पर्यस्तपटाञ्चलोच्चलनकपटेन पाणिकमलेन परिहरन्तीम्, प्रावृषमिव घनपयोधराम्, शरदमिव प्रसन्नसरसाशयाम्, चन्द्ररेखामिव चारुसुधाधराम्, समुद्रसंमदमिव समकरस्फुरितकंकणा-

१. 'लोचनः' ख. २. 'इन्दुकान्तमयकान्तानु' ख. ३. 'चकोरकिशोरककवलितच्छन्नप्रदेशान्' ख.

भिरामाम्, तारामिव सुग्रीवाधिरोपितहाराम्, सुयोधनसेनामिव कर्णावसक्तगाङ्गेयाभरणाम्, सुमेरुधरामिव सुवर्णमेखलाम्, सुरवनीमिव सुरतरुचिरोपगूढस्वान्ताम्, समग्रसकलावयवामपि दरदर्शितानङ्गविभ्रमाम्, सेनामप्यबलाम्, संजातसात्त्विकोदयामपि सान्द्रतमोविगाहनकुतूहलाम्, गुणानुरागिणीमपि दोषागमोत्सुकाम्, परलोकभीतामप्यङ्गीकृतस्वैरभावाम्, तामेव कान्तामपश्यम्' इति। सखे, खरकिरणसंतापितोऽपि शिशिरकरकलामालोकते न किं कुमुदाकरः। ततस्ततः। किं ब्रवीषि—'ततस्तदवलोकनसुधारसाप्यायितसकलावयवतया कमपि प्रमोदभरं[1]मन्तरासाद्य सद्य एव तया विघटितकवाटबन्धे प्रागेव दरविवृतकवाटपुटनिहित[2]करः पुरस्तात्प्रसार्य पूर्वं कार्यं [3]कायजसाम्राज्यकलाम्, कमलिनीं करेण गृहीत्वा तथैव मज्जननिवेशं प्रावेशयम्। प्रविश्य।

धम्मिल्लं मम मुञ्च मुञ्च किमिदं गृह्णासि चेलाञ्चलं
हारस्तुट्यति तिष्ठ तिष्ठ गुरवो निष्कारणाशङ्किनः।
मन्दं जल्प गृहे पतिः स्वपिति मे धूर्तेति संलापिनी
मामालिङ्गितवत्यमुक्तवसना सा सत्वरं प्रेयसी ॥१८७॥' इति।

सखे, [4]धन्योऽसि। यतः।

[5]वेश्या किं तव [6]कञ्चुकीं श्लथयितुं वेणीग्रहं मा कृथा
राज्यं नेदमराजकं तव बलात्कारेऽधिकारः कुतः।
नीवीं मा स्पृश ते स्पृशामि चरणावित्यालपन्ती हठा-
द्येनालं परिरभ्यते परवधूः सोऽयं हि धन्यो युवा ॥ १८८ ॥

किं ब्रवीषि—'[7]ततः

पादाग्रेण कथंचन स्थितवती बाहू निधायांसयो-
रुन्नम्योरसि मे गुरुस्तनभरेणोल्लेखनं कुर्वती।
बाला चुम्बनलम्पटेव[8] चपलं स्पृष्ट्वा कपोलस्थली-
मासिञ्चन्मम कामपि श्रवणयोरालापरूपां सुधाम् ॥ १८९ ॥

१. 'भरमतिमात्रमासाद्य' ख. २. 'निर्गतं' ख. ३. 'अकायसाम्राज्यकमलां' ख. ४. 'मान्यो' ख. ५. 'वेश्या' क. ६. 'कञ्चुली' क. ७. 'ततः' क-पुस्तके नास्ति. ८. 'लम्बितेव चपला' क.

यथा किल । अद्याहं शिरोवेदनापरिदूनेनार्यपुत्रेण श्वश्रूसमीप एव शयितुमादिष्टास्मि । श्वश्रूश्च मां प्रागेव शयनगृहं प्रस्थाप्य निद्रां प्रविश्य वर्तते । तदेहि तावत् । आवामशङ्कं पुरोद्याने विहराव' इति । सखे, साधु मन्त्रितं तया । श्वश्रूसमीपशायिनीं मन्यते पतिः । पतिसविधशायिनीं च श्वश्रूः । तदुभयतोऽपि न शङ्कनीयम् । ततस्ततः । किं ब्रवीषि—'ततश्च विततनालिकेरतरुशाखादलवलयकायमानान्तरितचन्द्रकरधोरण्या सरण्या तया तरुण्या तावदिदमेवोद्यानमानीतोऽस्मि । आनीय च सा

संलापकेलिकरताडनसोपहास-
ताम्बूलचुम्बनकचग्रहणैर्विलासैः ।
उद्बोधिताङ्गजतया स्वयमेव ताव-
त्प्रावर्तत प्रथमतो रतये नतभ्रूः ॥ १९० ॥

किं च ।

कण्ठाश्लेषिणमुन्नतस्तनभरश्रोणीतटग्राहिणं
रांसक्तोरुयुगं गृहीतजघनप्रावारमप्यन्ततः ।
प्रागेव श्लथबन्धमिन्दुवदना गाढावमर्दासहं
विज्ञायात्यजदाशु काञ्चनपटं व्रीडाकुलापि क्षणम् ॥ १९१ ॥' इति ।

मयूरक, सहायकं किं ब्रवीषि—'काञ्चनपटमित्य[illegible] [illegible] [illegible]
वत आत्मानमेव तादृशमत्यजदिति कथयसीति [illegible] इति ।
(सस्मितम् ।) भवतु । ततस्ततः । किं ब्रवीषि—'वय[illegible], [illegible] वरम् ।

प्रागल्भ्यं पुरुषायिते मम पुरः पश्येति संनह्यता
तन्व्या नाम्यनुरोजयापि सुचिरं विक्रम्य [illegible] तदा ।
श्रान्ता वक्षसि मे निपत्य च पुनः सानन्दं [illegible]
साकूतं च समीक्षितं मृगदृशा यत्त[illegible] [illegible] ॥ १९२ ॥

एवमनेक[illegible]विधविहारैरयामवतीमपि यामवतीं [illegible] यावदेव
पुनरुपेक[illegible]मालिङ्गितुमुद्यतोऽस्मि, तावदेव

१. 'परिदूयमानेन' ख. २. 'द्रागेव' क. ३. 'यत. किल' ख.

करा्भ्यामाकृष्य क्वणितवलयाभ्यां सरभसं
समासज्य स्वैरं कुचकलशयोरुत्पुलकयोः।
गलत्काञ्चीदामन्यलघुनि समारोप्य जघने
तया बद्धो गाढं तदनु सुकृती

(इत्यर्धोक्ते।) वयस्य, सत्यमेव[1] सुकृती भवान्। यतः।

परिरम्भकेलिपरिहासभाषणैर्भृशमादृतोऽपि न वशं समेति यः।
स वधूजनोऽपि यतते यदि स्वयं ग्रहणाय तत्पुरुषपुण्यगौरवम्॥ १९४॥

(सनिःश्वासम्।) किं ब्रवीषि—'क्व वा[2]मेतादृशं सुकृतम्' इति। कस्तर्हि। किं ब्रवीषि।

'काञ्चनपटः॥ १९३॥' इति।

ततस्ततः। किं ब्रवीषि—'ततश्च

प्रभातप्रायेयं र[3]जनिरजनि प्राग्गुरुजन-
प्रबोधाद्गन्तव्यं विसृज विसृजेति द्रुतगतिः।
पटान्ते लग्नं मां परिहृतवती पद्मनयना
प्रयाता पश्यन्ती विवलितमुखेन्दुः प्रतिपदम्॥ १९५॥'

त[4]तः प्रभृति

अत्राकारितमत्र चुम्बितमिहाश्लिष्टं च हृष्टं पुन-
स्तन्वङ्ग्यात्र विसृष्टमत्र शयितं चात्रैव संभाषितम्।
इत्थं कुञ्जगृहेषु तान्तसुमनस्तल्पेषु वापीतट-
क्रीडासैकतकेषु च प्रतिपदं भ्राम्यामि हृष्यामि च॥ १९६॥

मयूरक, किं ब्रवीषि—'सखे, 'नक्तं दिवमपि तया किं तवाङ्कमारूढया भवितव्यम्। प्रयाता चेन्नक्तमागमिष्यति किमेता[5]वता' इति। एवमेतत्।

अतनुतापमपास्य निशि प्रभाकरकलत्रमसौ मुकुलस्तनीम्।
कमलिनीमचिरात्कलहंसको रमयतीति वयस्य किमद्भुतम्॥ १९७॥

किं ब्रवीषि—'यदि तावदनेहसं प्रसूनमार्गणो मार्गणानु[6]पसंहरिष्यति ततः

१. 'तथ्य' ख. २. 'मम' ख. ३. 'भवति रजनी' ख. ४. 'तदा' ख. ५. 'किमु तावता' ख. ६. 'उपसंहरति' ख.

शुभोदर्कं भविष्यति न भविष्यति वा' इति । मयूरक, किं ब्रवीषि— 'सखे, प्रमदवनपालिकां मरालिकामाहूय कलहंसकस्य शिशिरोपचारं कारय' इति । (स्मरणमभिनीय स्वगतम् ।) प्रियाप्रस्थानवृत्तान्तावगमाय प्रेषिता किल मया, वनपालिका मरालिका । भवतु । (प्रकाशम् ।) क्वेदानीं मरालिका । कलहंसक, किं ब्रवीषि—'वयस्य, मरालिकानामग्रहणेन स्मृत्वा कथयामि । सा खल्वितः पूर्वस्मिन्नेव मुहूर्ते वयस्यमेव सुचिरमितस्ततोऽन्विष्यान्विष्यानुपलभ्य क्वापि मत्संकाशमागत्य 'अये कलहंसक, तव प्रियसखो मुकुन्दश्चिरमन्विष्टोऽपि न दृष्टः । तदागते तस्मिन्निदं तस्य करे समर्पणीयम्' इति स्वकरकुसुमपुटिकान्तरादुद्धृत्य पत्रिकायुगलं मदुपकण्ठे निधाय मया पुनरपि 'त्वमेव तदागमनपर्यन्तं स्थित्वा गच्छ' इति मुहुरुदीरितापि 'ननु तावदहं राजवल्लभेन मन्दारेण पुराद्बहिरद्य नक्तं कालिकाया बल्युत्सवं कारयता कुसुमानयनायादिष्टास्मि । तत्क्षणमपि विलम्बितुं बिभेमि' इत्युक्त्वा गतवती इति । (सहर्षं स्वगतम् ।)

विजहाति वक्रिमाणं विधिरधुना तावदीषदिव ।
शुभसूचकान्यमूनि श्रूयन्ते कतिचिदक्षराणि यतः ॥ १९८ ॥

अद्योत्सवदिने नूनं कन्यकापत्यवत्सलः ।
प्रस्थापयति मन्दारो भर्तुर्गेहं न मञ्जरीम् ॥ १९९ ॥

ततस्तत्रैव मरालिका कालिकायतनोद्याने प्रियतमा पूरयिष्यति मे[2] मनोरथमिति तर्कयामि । (प्रकाशम् ।) सखे, एकां तावदुपनय पत्रिकाम् । किं ब्रवीषि—'इदं गृह्यताम्' इति । (गृहीत्वा विलोक्य ।) कथमिदं प्रियाकबरीभारपरिमिलितं केत[3]कीदलमेव । तदेव निर्दिश्य

प्रियावियोगविधुरं ममेवाकृतिनस्तव ।
परिम्लानमभूदङ्ग केतकच्छद तत्कथम् ॥ २०० ॥

अथवा ।

आनीय सस्मितमुखीभिरलं सखीभि-
र्नद्धोऽसि मुग्ध इव वेणिकया नताङ्ग्याः ।

---

१. 'समीपं' ख. २. 'मे' क-पुस्तके नास्ति. ३. 'कैतकदलं' ख.

हे केतकच्छद तयैव नखैर्लिखन्त्या[1]
भुक्तस्त्वमेव सुकृती पुनरेष नाहम् ॥ २०१ ॥

सखे, किं ब्रवीषि—'वाचय'[2] इति। (प्राकृतमाश्रित्य वाचयति।) सोत्थि महाभाअस्स। एसा गच्छह्मि मन्दभाइणी पइभवणम्। (क)। (सास्रम्।) वयस्य, अतःपरं न शक्नोमि वाचयितुम्।

कम्पः पाणेः श्लथयति बलात्केतकीबर्हमेत-
च्चक्षुर्बाष्पं स्थगयति ततो नैव बध्नाति लक्ष्यम्।
चेतो मोहप्रसरकलुषं बुध्यते नापि किंचि-
ज्जातं शून्यं शिव शिव जगत्प्रस्थितेति प्रिया मे ॥ २०२ ॥

तत्त्वमेव वाचय। (गृहीत्वा।) किं वाचयसि।

ओहरइत्ति पई मं पिअ मा पज्जाउलो तुमं होहि।
सो हरइ ताव अङ्गं अत्ताणं हरइ तुइ कहं लग्गम् ॥ २०३ ॥

अण्णं अ।

सीसम्मि कदुअ पाणी सदवारं णाह विण्णवेमि तुमम्।
काऊण मइ सिणेहं मा णिअकाअम्मि णिद्दओ होहि ॥ २०४ ॥ (ख)

(सोच्छ्वासम्।)

अतिसाहसमारूढमियतैव प्रिये त्वया।
असाविदमपि श्रृण्वन्हन्त प्राणिमि कर्कशः ॥ २०५ ॥

वयस्यौ, किं ब्रूथः—'सखे, सर्वथा नास्मिन्दिवसे तस्याः प्रस्थानं भवति[3]।

(क) स्वस्ति महाभागस्य। एषा गच्छामि मन्दभाग्या पतिभवनम्।
(ख) अपहरतीति पतिर्मां प्रिय मा पर्याकुलस्त्वं भव।
स हरेत्तावदङ्गमात्मानं हरति त्वयि कथं लग्नम् ॥
अन्यच्च।
शीर्षे कृत्वा पाणी शतवारं नाथ विज्ञापयामि त्वाम्।
कृत्वा मयि स्नेहं मा निजकाये निर्दयो भव ॥

१. 'लिखिला' ख. २. 'वाचयेति' क-पुस्तके नास्ति. ३ 'संभवति' ख.

परंतु श्वशुरकुलमाकुलयितुं तस्याः पतिहतकेन केवलं विचेष्टमानेन भवितव्यम् । तथाहि ।

मृष्टान्नेषु मृषारुचिः सुवसने दर्पादिवानादरः
सान्त्वोक्तौ कुटिलोक्तयः किल सुहृद्भावेऽपि सासूयता ।
प्राप्तेषूत्सववासरेषु च पुनः सद्यः प्रयाणोद्यम-
स्तज्जामातृपदाङ्कितो न कुरुते किंनाम दुश्चेष्टितम् ॥ २०६ ॥' इति ।

प्रकृतिरेवेयं मूर्खाणां यत्प्रस्तुतेषु प्रतीपाचरणम् । किं ब्रवीषि—'इमामपि पत्रिकां शृणोतु वयस्यः' इति । (साशङ्कम् ।) सखे, बिभेमि श्रोतुम् । (पुनः सधैर्यम् ।) किमितोऽधिकं दारुणं भविष्यति । वाचय वाचय । किं वाचयसि—'स्वस्ति समस्तविलासिनीजनमस्तकमणिस्तोमनीराजितचरणनखमण्डलाय विटमण्डलाखण्डलाय युवतिहृदयानन्दकन्दाय मुकुन्दाय । सादरमिदमाकलनीयं वयस्येन वचनं बालमित्रस्य वीतिहोत्रस्य ।

मा प्रस्थिता प्रियतमेति कृथा विषादं
प्रागेव सा पुनरुपैति गृहान्प्रदोषात् ।
मा भारती मम मृषेति च जातु शङ्का
ज्योतिर्विदां व्यभिचरन्ति वचांसि नार्थात् ॥ २०७ ॥

तत्कतिचिदेव कालं सोढव्यः संतापः' इति । (विहस्य ।) सायमागन्तुमेव किल महोत्सवमप्यनादृत्य पत्या तामादाय प्रातर्गतम् । किं ब्रवीषि—'वयस्य, मा मैवम् । न खलु दैवज्ञा मृषाभाषिणो भवन्ति । तदा प्रदोषं प्रतिपालनीयमेव' इति । किमेवमपि वक्तव्यम् । प्रतिपाल्यत एव यावत्प्राणधारणम् । किं ब्रवीषि—किं नाम करणीयम् । अकारणवैरिणा दैवेन दारुणमसासु त्रिष्वपि प्रदर्शितम् । अत्र भवितव्यतैव भगवती प्रभवति' इति । भवतु । कश्चन कथाप्रसङ्गः प्रस्तूयतां वासरशेषमतिवाहयितुम् । (इतरेतरमवलोक्य ।) किं ब्रूथः—'किमप्रस्तुतेनान्यकथाप्रस्तावेन । यदेव तावदाकर्ण-

१. 'मिष्टान्नेषु' ख. २. 'किं वाचयसि' क-पुस्तके नास्ति. ३. 'बाल्य' ख. ४. 'वृथा' ख. ५. 'नार्थम्' ख. ६. 'सोढव्याः संतापाः' क. ७. 'मागतमेव' क. ८. 'तावत्' क. ९. 'ब्रूथः' ख.

हे केतकच्छद तयैव नखैर्लिखन्त्या[1]
भुक्तस्त्वमेव सुकृती पुनरेष नाहम् ॥ २०१ ॥

सखे, किं ब्रवीषि—'वाचय'[2] इति । (प्राकृतमाश्रित्य वाचयति ।) सोत्थि महाभाअस्स । एसा गच्छह्मि मन्दभाइणी पइभवणम् । (क) । (सास्रम् ।) वयस्य, अतःपरं न शक्नोमि वाचयितुम् ।

कम्पः पाणेः श्लथयति बलात्केतकीबर्हमेत-
च्चक्षुर्बाष्पं स्थगयति ततो नैव बध्नाति लक्ष्यम् ।
चेतो मोहप्रसरकलुषं बुध्यते नापि किंचि-
ज्जातं शून्यं शिव शिव जगत्प्रस्थितेति प्रिया मे ॥ २०२ ॥

तत्त्वमेव वाचय । (गृहीत्वा ।) किं वाचयसि ।

ओहरइत्ति पई मं पिअ मा पज्जाउलो तुमं होहि ।
सो हरइ ताव अङ्गं अत्ताणं हरइ तुइ कहं लग्गम् ॥ २०३ ॥

अण्णं अ ।

सीसम्मि कदुअ पाणी सदवारं णाह विण्णवेमि तुमम् ।
काऊण मइ सिणेहं मा णिअकाअम्मि णिद्दओ होहि ॥ २०४ ॥ (ख)

(सोच्छ्वासम् ।)

अतिसाहसमारूढमियतैव प्रिये त्वया ।
असाविदमपि शृण्वन्हन्त प्राणिमि कर्कशः ॥ २०५ ॥

वयस्यौ, किं ब्रूथः—'सखे, सर्वथा नास्मिन्दिवसे तस्याः प्रस्थानं भवति[3] ।

(क) स्वस्ति महाभागस्य । एषा गच्छामि मन्दभाग्या पतिभवनम् ।
(ख) अपहरतीति पतिर्मां प्रिय मा पर्याकुलस्त्वं भव ।
स हरेत्तावदङ्गमात्मानं हरति त्वयि कथं लग्नम् ॥
अन्यच्च ।
शीर्षे कृत्वा पाणी शतवारं नाथ विज्ञापयामि त्वाम् ।
कृत्वा मयि स्नेहं मा निजकाये निर्दयो भव ॥

१. 'लिखिता' ख. २. 'वाचयेति' क-पुस्तके नास्ति. ३ 'संभवति' ख.

परंतु श्वशुरकुलमाकुलयितुं तस्याः पतिहतकेन केवलं विचेष्टमानेन भ-वितव्यम् । तथाहि ।

मृष्टान्नेषु[1] मृषारुचिः सुवसने दर्पादिवानादरः
सान्त्वोक्तौ कुटिलोक्तयः किल सुहृद्भावेऽपि सासूयता ।
प्राप्तेषूत्सववासरेषु च पुनः सद्यः प्रयाणोद्यम-
स्तज्जामातृपदाङ्कितो न कुरुते किंनाम दुश्चेष्टितम् ॥ २०६ ॥' इति ।

प्रकृतिरेवेयं मूर्खाणां यत्प्रस्तुतेषु प्रतीपाचरणम् । किं ब्रवीषि—'इमा-मपि पत्रिकां शृणोतु वयस्यः' इति । (साशङ्कम् ।) सखे, बिभेमि श्रोतुम् । (पुनः सधैर्यम् ।) किमितोऽधिकं दारुणं भविष्यति । वाचय वाचय । किं वाचयसि[2]—'स्वस्ति समस्तविलासिनीजनमस्तकमणिस्तोमनीराजितचरण-नखमण्डलाय विटमण्डलाखण्डलाय युवतिहृदयानन्दकन्दाय मुकुन्दाय । सादरमिदमाकलनीयं वयस्येन वचनं बालमित्रस्य[3] वीतिहोत्रस्य ।

मा प्रस्थिता प्रियतमेति कृथा[4] विषादं
प्रागेव सा पुनरुपैति गृहान्प्रदोषात् ।
मा भारती मम मृषेति च जातु शङ्का
ज्योतिर्विदां व्यभिचरन्ति वचांसि नार्थात्[5] ॥ २०७ ॥

तत्कतिचिदेव कालं सोढव्यः संतापः[6]' इति । (विहस्य ।) सायमागन्तुमेव[7] किल महोत्सवमप्यनादृत्य पत्या तामादाय प्रातर्गतम् । किं ब्रवीषि—'व-यस्य, मा मैवम् । न खलु दैवज्ञा मृषाभाषिणो भवन्ति । तदा प्रदोषं प्रतिपा-लनीयमेव' इति । किमेवमपि वक्तव्यम् । प्रतिपाल्यत एव यावत्[8]प्राणधार-णम् । किं ब्रवीषि—किं नाम करणीयम् । अकारणवैरिणा दैवेन दारुणम-स्मासु त्रिष्वपि प्रदर्शितम् । अत्र भवितव्यतैव भगवती प्रभवति' इति । भवतु । कश्चन कथाप्रसङ्गः प्रस्तूयतां वासरशेषमतिवाहयितुम् । (इतरेतरमव-लोक्य ।) किं ब्रूथः[9]—'किमप्रस्तुतेनान्यकथाप्रस्तावेन । यदेव तावदाकर्ण-

---

१. 'मिष्टान्नेषु' ख. २. 'किं वाचयसि' क-पुस्तके नास्ति. ३. 'बाल्य' ख. ४. 'वृथा' ख. ५. 'नार्थम्' ख. ६. 'सोढव्याः संतापाः' क. ७. 'मागतमेव' क. ८. 'तावत्' क. ९. 'ब्रूथः' ख.

यितुमावयोरद्भुतजलनिधिनिमग्नमन्तःकरणम्, तदेव मञ्जरीसमागमसंविधानमानुपूर्व्येण कथयतु वयस्यः' इति । (किंचिन्मुखमवनम्य ।) किमनेन कथितेनाकथितेन वा विफलेन मनोरथेन । तथापि प्रियसहचरयोरनुयोगो न प्रत्यादेशमर्हतीति कथयामि तावत् । आकर्णयतं वयस्यौ । किं ब्रूथः—'इमाववहितौ स्वः' इति । अस्ति किल समस्तसुरमस्तकमणिस्तबकपालीदीपालीनीराजितचरणनखस्य चरणानतचतुर्मुखस्य भगवतो भागवतहृदयमन्दिराभरणस्य श्रीमदिन्दिरारमणस्य निरन्तरतरङ्गदभङ्गुरोत्सवनटनरङ्गं निखिलनगरोत्तमाङ्गं निशाकरपुष्करिणीपरिष्कृतोत्सङ्गं कवेरकन्यकाकृतपरिष्वङ्गं कनकगोपुरोत्तुङ्गं वन्दनमालिकावलदनेकभृङ्गं वन्दारुजनपापभङ्गं वैजयन्तिकाचुम्बितगगनगङ्गं गगनगङ्गाधौतसौधशृङ्गं शृङ्गाटकनटत्क्रीडाकुरङ्गं कुरङ्गलोचनापाङ्गतरङ्गितानङ्गमनङ्गमदचटुलवारकान्तावशीकृतभुजंगं जङ्गमगाङ्गेयगिरिगुरुशताङ्गं शताङ्गचरणकरपरिचरणपरिणतमत्तमातङ्गं मातङ्गमदजलासिक्तरथ्यानटत्तुरंगं तुरंगखुरदलितकुट्टिमसमुत्थितपरागपरम्परापिहितपतङ्गं पतङ्गमणिमण्डपमण्डनशुकसारिकाक्रियमाणहरिकथाप्रसङ्गं संगतनिगमहृदयान्तरङ्गं श्रीरङ्गम् । किं ब्रूथः—'अस्त्यसकृदवलोकितमध्यासितं च ।

सह्यक्ष्माधरतुङ्गशृङ्गघटितप्रालम्बमानोल्लस-
त्कावेरीपरिवाहरश्मियुगलीपर्यन्तपर्यङ्किका ।
मन्ये रङ्गपुरीति यत्र भगवान्वातूलतूलाञ्चिते
तल्पे कल्पितकौतुकः कमलया दोलासुखं ढौकते ॥ २०८ ॥

ततस्ततः' इति । कदाचन किल कमलाहृदयकमलभृङ्गराजस्य रङ्गराजस्य चैत्रोत्सवावलोकनप्रसङ्गाद्वसन्तकसंतानकप्रमुखैः प्रियसखैः सह रङ्गनगरीं गतः । तत्र तैस्तैरुत्सवैरमन्दकन्दलितमानन्दमनुभवन्कतिचन दिनान्यनैषम् । एकदा तु कलकलायमानकोकिलकुलकण्ठगर्जिततर्जितपथिकजननयनबाष्पधारापूरपूरितसरणीषु मधुमदचपलमधुकरतरलबकुलमुकुलगलितमकरन्दधोरणीषु चन्दनमरुदान्दोलितलताकुसुमपरागपुलिनशबलितासु कुसुमावचयकुतुकपौराङ्गनाचरणचङ्क्रमणरणन्मणिमञ्जुमञ्जीरमञ्जुलरवाकृष्ट-

१. 'निमग्नं' ख. २. 'अवनमय्य' ख. ३. 'चरत्' ख. ४. 'पराङ्गना' ख.

कलहंसधवलितासु क्रीडाकुरङ्गकिशोरककवलितदूर्वाङ्कुरासु वनदेवताकर-कलितबलिकुसुमकोरकितशशिकान्तमणिवेदिकासु कवेरजातटवनवीथिकासु कदाप्यदृष्टपूर्वतया निसर्गरमणीयतया च तस्य देशस्य चित्रीकृतहृदय-स्तत्र तत्र संचरन्कंचन चञ्चलापुञ्जमिव जलदावतीर्णं पञ्चबाणकलितमिव काञ्चनलतालीलावनं कृतभूतलावतारमिव तारकानिकुरम्बं तरुणीकदम्ब-मालोकयम् । किं ब्रूथः—'ततस्ततः' इति ।

वदनपरिमलाशावल्गदिन्दिन्दिराली-
वलयशिखिशिखण्डच्छत्रशालिन्यघोघः[1] ।
युवतिजनकदम्बे मञ्जरी तत्र दृष्टा
नवकिसलयलेखामण्डले मञ्जरीव ॥ २०९ ॥

तया च ।

कालिन्दीपुलिनेषु मे विहरतश्चेतोदुकूले चिरं
चित्रं गोपवधूमयं विरचितं चेतोभुवा यत्पुरा ।
तन्वङ्ग्या मम दृक्पथेन रभसादन्तः प्रविश्य क्षणा-
त्तत्सर्वं निजकान्तिकुङ्कुमरसैः कोपादिव क्षालितम् ॥ २१० ॥

मयूरक, किं ब्रवीषि—'अपि नाम तादृशी रूपसंपत्तिः' इति । कलहंसक, किं ब्रवीषि—'कथमन्यथा हृदयमवगाहतां वयस्यस्य' इति । अथ किम् ।

अमृतमयपयोधिमज्जयोर्नौ हरिणकिशोरदृशो मुखापदेशात् ।
कलयति गलितो य एकबिन्दुर्जगति बभूव स एव नूनमिन्दुः ॥२११॥

अपि च ।

कुन्ताः कुटिलदृगन्ता दन्ता नवकुन्द[2]कुसुमसामन्ताः ।

(निःश्वस्य ।)

चिन्ता मम तु दुरन्ता

तथापि [3]संग्रहेण कथयामि ।

वान्ता तडिदेव वारिदात्कान्ता ॥ २१२ ॥

---

१. 'जालान्यघोघः' ख. २. 'कुन्द' क-पुस्तके नास्ति. ३. 'संक्षेपेण' ख.

किं ब्रूथः—'ततस्ततः' इति । ततश्च तासु यथाभिलषितं तत्र तत्र लताकुञ्जेषु कुसुमावचयं कुर्वतीषु स्वयमेकैव सा मञ्जरी मदनमदकुञ्जरीव तत इतश्चरन्ती क्वचन माकन्दलतामन्दिरद्वारवेदिकामधिरुह्य वसति मयि किंचिदिव विवर्तितवदना मदनावेशतरङ्गितान्यपाङ्गानि व्यापारयति स्म । तथाहि ।

स्वच्छन्दमेत्य मयि न प्रसृतानि कामं
स्वावास एव निभृतं न पुनःस्थितानि ।
लक्ष्यान्तरेऽपि च न लब्धपदानि तस्याः
पारिप्लवानि पथि केवलमीक्षितानि ॥ २१३ ॥

किंच ।

अन्यासु तासु कुसुमान्युपचिन्वतीषु
कुञ्जेषु मञ्जु मदकुञ्जरगामिनीषु ।
सा मञ्जरी तु मम सामिविलोकितेन
चेतोमयं जलजमाहरदेकमेव ॥ २१४ ॥

किं बहुना ।

पादाभ्यामुपरुद्धमूरुयुगलीयन्त्रेण निष्पीडितं
मध्येनानृतमूर्तिना मृगदृशो नाभौ बलान्मज्जितम् ।
व्याकृष्य त्रिवलीषु रोमलतया वक्षोजशैलाग्रयोः
क्षिप्तं वीक्षितसायकैर्मम मनो विद्धं च बद्धं कचैः ॥ २१५ ॥

किंच ।

आयातं कचभारबन्धनगृहादास्यामृताम्भोनिधौ
स्नातं दन्तपटीपटीपरिहितं नेत्रोत्पलालंकृतम् ।
चेतो मे विनिवेश्य चित्तजनुषा वक्षोजसिंहासने
साम्राज्ये पुनरभ्यषेचि सुदृशः सेरापदेशामृतैः ॥ २१६ ॥

१. 'आनतमूर्तिना' ख. २. 'कोमलतया' ख. ३. 'अस्या मुखाम्भो' क.

किं ब्रूथः—'स्थाने खलु मनोजन्मनो जनकसमाराधनानुरोधः' इति । [1]वयस्यौ, मा मैवम् । अनियतमनङ्गहतकस्य सौहार्दम्, यतस्तेनैव पुनः

[2]अवचितकुसुमाभिस्ताभिरालीभिरेषा
कथमपि पुरमारात्प्रस्थिता यावदेव ।
शिव शिव मम तावच्चित्तजेनाशु चित्तं
प्रमथितमवदीर्णं चूर्णितं घूर्णितं च ॥ २१७ ॥

वयस्यौ, किं ब्रूथः—'अव्यवस्थितचित्तस्य प्रसादोऽपि भयंकरः इति सत्यमेव संवृत्तम् । ततस्ततः' इति । ततश्चान्तरान्तरा सव्याजविवलितमुखीं सुमुखीमारादिवानुसरंस्तदगारद्वारपर्यन्तं गतोऽस्मि ।

तदेन्द्रजालसंरम्भं समजृम्भयदङ्गजः ।
प्रविष्टामपि गेहं त्वां यन्मे प्रावेशयन्मनः ॥ २१८ ॥

अथ तावदशिथिला[3]वयवसंधिबन्धमज्ञातकैतवकथागन्धं सिन्धुमिव जडाशयम्, जलदमिव पयोवाहम्, जलदकालमिव घनमषीमलिनाम्बरम्, प्रलयानलमिव दग्धकाष्ठावलिम्, हरमिवाग्निविकारलोचनम्, नारायणमिव भक्तानुकूलव्यापारम्, शेषमिवोद[4]ग्रदर्वीकरम्, गरुडमिवाधिगतमहानसम्, कृष्णमिव क्षालितकंसमालिन्यम्, राममिव मारीचमथनम्, भीमसेनमिव दलितज्वलितकीचकशतम्, शक्रमिव पाकशासनम्, मत्तमातङ्गमिव करपिष्टना[5]गरम्, वैयाकरणमिव विदितस्वरसव्यंजन[6]प्रक्रियम्, वैशेषिकमिव द्रव्यगुणक्रियाजातिविशेषतत्समवायक्रमाभिज्ञम्, मीमांसकमिवार्थभावनास्वरूपज्ञम्, सुकविमिव विज्ञातशिखरिणीभेदम्, पण्डितमिव परिचितसकलरसपरिपाकम्, कमपि कज्जलमेचकं पाचकमपश्यम् । स च वसन्तकमुखेन पृष्टः स्वभावसरलतया तस्याः सकलमपि नामकुलशीलादिकमकथयत् । [7]तथा हि—यथा किल इयमस्मत्स्वामिनो मलयस्य स्नुषा माधवस्य कलत्रं मञ्जरी नाम्नी मन्दारस्य नन्दिनी । इयमद्य श्वो वा बन्धुकुलदिदृक्षया नवीननगरं गमिष्यति । यत्र पितुर्मन्दारस्य मन्दिरम्' इति ।

---

१. 'वयस्यौ' क-पुस्तके नास्ति. २. 'अपचित' क. ३. 'सकलावयव' ख. ४. 'प्रदग्र' ख. ५. 'नागरङ्ग' ख. ६. 'विक्रियं' ख. ७. 'तथा हि' क-पुस्तके नास्ति.

।, किं ब्रूथः—'अहो परमार्थवादिता याचकस्य। ततस्ततः' इति। ततः कतिपयदिनान्तर एव सा नवीननगरमिदमागता। पश्चादहमपि। अत्र च मयीव तस्यामप्यपक्षपातं दर्शितदर्पे कंदर्पे तत्र भगवत्या जटावत्या विदिततदभिप्रायया परमकारुणिकया स्वयमेव तीर्थयात्राप्रसङ्गेन कालिन्दीतीरवृन्दावने विज्ञातपूर्वं मामुपगम्य कृतप्रणाममाशीर्भिरभिनन्द्य 'वत्स मुकुन्द, कथं कन्दर्पसुन्दरांयां कन्दलति तव तनाविन्दाविव तानवम्। किमेतदध्वश्रमाद्भवेत्, आहोस्विदिष्टबन्धुविप्रयोगात्, किंवा मदनधनुश्चेष्टितादित्यसकृदनुबध्यानुयुक्तो मनस्येव किं मामुपहसितुम्, किमवधीरयितुम्, किं वा निग्रहीतुम्, किं वानुग्रहीतुं पृच्छति। किमस्यै संवरणीयं विवरणीयं वेति क्षणं विचिन्त्य पुनरेव कुतो महाभावानामनुग्रहादन्यत्राभिनिवेशो भवेदिति कृताध्यवसायः सानुपूर्व्यं भगवत्यै मदनवेदनां न्यरूपयम्। वयस्यौ, किं ब्रूथः—'वयस्य, सम्यगध्यवसितम्। ततस्ततः' इति। सा च तदाकर्ण्य 'वत्स, एवमेव वत्सयापि बाल्यात्प्रभृति मन्दकलालितया मञ्जर्याप्यभिधाय सप्रार्थनं वत्ससकाशं प्रहितास्मि। शृणु तस्याः समवस्थाम्।

> सूते बालरसालपल्लवततिः श्वासाहता मर्मरं
> पाणिस्पर्शनशोषिताः सुमनसो भ्रश्यन्ति वृन्तैः समम्।
> म्लायन्ते नयनान्तवान्तसलिलैर्हा हन्त दूर्वाङ्कुरा-
> दावस्पृष्टमिवाद्य निष्कुटवनं तन्व्या दरीदृश्यते॥ २१९॥

तद्भद्र, नोपेक्षणीया बलवदस्वस्था बाला' इत्यभिहितवतीं भगवतीम् 'अयमहं प्रियायाः साहजिकानङ्गतरङ्गितैरपाङ्गैरेव प्रथमं क्रयविक्रयार्हदशामासादितोऽस्मि। विशेषतश्चाद्य तत्रभवत्याः प्रसादेन। तद्यथाभिलषितं नियुज्यस्व' इत्यवोचम्। किं ब्रूथः—'सांप्रतं भगवत्यां न्यस्तभारोऽसि। ततस्ततः' इति। ततः सा भगवती दीर्घं निःश्वस्य।

> रूपलावण्यसौन्दर्यसंपदा समयोर्द्वयोः।
> प्रेम्णा च युवयोर्हन्त परिपन्थी वृथा विधिः॥ २२०॥

---

१. 'मदनदुश्चेष्टिता' ख. २. 'अन्यथा' ख. ३. 'सा तु' क. ४. विक्रयार्हा ख.

तदमुना निष्कारणवैरिणा विहन्यमानो[1] मत्प्रयत्नः कथं शुभोदर्को भविष्यति । अथवा[2] त्रिलोकविजयिनो मन्मथस्य व्यवसितुं कथं नाम विघटयतु कुटिलधीरपि विधिः । भवतु । समयमन्विष्य योजयिष्यामीत्युक्त्वा तत्प्रभृति तया कृतो बहुविधोऽपि प्रयत्नो मदीयदुर्विधिपाकादेव[3] प्रतिहतः । ह्यस्तु पुनर्मन्दारारामे सा मे भगवत्या जटावत्याः प्रसादात्प्रियतमा मञ्जरी करतलर्लम्भेव[4] । किं ब्रूथः—'चिराय पलितं प्रियसखस्य मनोरथेन' इति । (सनिःश्वासम् ।) नहि नहि । किं तु फलोन्मुख एव भग्नः । वयस्यौ, किं ब्रूथः—'कथं कथम्' इति । (सविषादम् ।)

कुञ्जे कोमलशाद्वले पदमिह द्रागर्पितं वा न वा
किंचिच्चाटु चमत्कृतं च वचनं किं व्याहृतं वा न वा ।
साकूतप्रणयं च सामि नयनं व्यापारितं वा न वा
तन्व्या हन्त तदन्तरे विधिवशात्तस्याः प्रबुद्धः पतिः ॥ २२१ ॥

अद्यतनस्तु वृत्तान्तः प्रियवयस्ययोर्विदित एवास्ति । किं ब्रूथः—'भवतु । किमेतावता । अस्मिन्दिवसे फलिष्यत्येव ते मनोरथः' इति । (विहस्य ।) नन्वमद्यैव फलिष्यति, यस्मात्प्रियतमा पत्या समं प्रस्थिता । किं ब्रूथः[6]— 'सखे, अपि नाम विस्मृतं वीतिहोत्रप्रेषितं पत्रम्' इति । (दिशो विलोक्य ।) विस्मृतप्रायमेव, यदयं प्रदोषसमयोऽप्युपनतः । तथा हि ।

द्रागैन्द्रीमनुचुम्ब्य सस्मितमुखीमामोदिनीं पद्मिनीं
कृत्वासौ परिरम्भसंभ्रमपरिश्रान्तां च वारश्रियम्[7] ।
संरक्तोऽहिमभानुरद्य च[8] समाश्लिष्यत्यहो रागिणीं
काश्मीरोपलसत्पयोधरभरां कान्तां दिशं वारुणीम् ॥ २२२ ॥

किं च ।

पुराणरश्मिजालेषु स्रस्तेष्वस्तावलम्बनम् ।
बिम्बमम्बुरुहां नेतुरम्बरादवलम्बते ॥ २२३ ॥

---

१. 'निहन्यमानो' ख. २. 'अथवात्र' ख. ३. 'विपाकेनैव' ख. ४. 'लभेव' क. ५. 'भविष्यति' ख. ६. 'ब्रवीषि' क. ७. 'श्रियम्' क. ८. 'चरमां श्लिष्यत्यहो' क.

वयस्यौ, किं ब्रूथः—'अहो परमार्थवादिता याचकस्य । ततस्ततः' इति । ततः कतिपयदिनान्तर एव सा नवीननगरमिदमागता । पश्चादहमपि । अत्र च मयीव तस्यामप्यपक्षपातं दर्शितदर्पे कंदर्पे तत्र भगवत्या जटावत्या विदिततदभिप्रायया परमकारुणिकया स्वयमेव तीर्थयात्राप्रसङ्गेन कालिन्दीतीरवृन्दावने विज्ञातपूर्वं मामुपगम्य कृतप्रणाममाशीर्भिरभिनन्द्य 'वत्स मुकुन्द, कथं कन्दर्पसुन्दरायां कन्दलति तव तनाविन्दाविव तानवम् । किमेतदध्वश्रमाद्भवेत्, आहोस्विदिष्टबन्धुविप्रयोगात्, किंवा मदनधनुश्चेष्टितादित्यसकृदनुबध्यानुयुक्तो मनस्येव किं मामुपहसितुम्, किमवधीरयितुम्, किं वा निग्रहीतुम्, किं वानुग्रहीतुं पृच्छति । किमस्यै संवरणीयं विवरणीयं वेति क्षणं विचिन्त्य पुनरेव कुतो महाभावानामनुग्रहादन्यत्राभिनिवेशो भवेदिति कृताध्यवसायः सानुपूर्व्यं भगवत्यै मदनवेदनां न्यरूपयम् । वयस्यौ, किं ब्रूथः—'वयस्य, सम्यगध्यवसितम् । ततस्ततः' इति । सा च तदाकर्ण्य 'वत्स, एवमेव वत्सयापि बाल्यात्प्रभृति मन्दकलालितया मञ्जर्याप्यभिधाय सप्रार्थनं वत्ससकाशं प्रहितास्मि । शृणु तस्याः समवस्थाम् ।

सूते बालरसालपल्लवततिः श्वासाहता मर्मरं
पाणिस्पर्शनशोषिताः सुमनसो भ्रश्यन्ति वृन्तैः समम् ।
म्लायन्ते नयनान्तवान्तसलिलैर्हा हन्त दूर्वाङ्कुरा-
दावस्पृष्टमिवाद्य निष्कुटवनं तन्व्या दरीदृश्यते ॥ २१९ ॥

तद्भद्र, नोपेक्षणीया बलवदस्वस्था बाला' इत्यभिहितवतीं भगवतीम् 'अयमहं प्रियायाः साहजिकानङ्गतरङ्गितैरपाङ्गैरेव प्रथमं क्रयविक्रयार्हदशामासादितोऽस्मि । विशेषतश्चाद्य तत्रभवत्याः प्रसादेन । तद्यथाभिलषितं नियुज्यस्व' इत्यवोचम् । किं ब्रूथः—'सांप्रतं भगवत्यां न्यस्तभारोऽसि । ततस्ततः' इति । ततः सा भगवती दीर्घं निःश्वस्य ।

रूपलावण्यसौन्दर्यसंपदा समयोर्द्वयोः ।
प्रेम्णा च युवयोर्हन्त परिपन्थी वृथा विधिः ॥ २२० ॥

---

१. 'मदनदुश्चेष्टिता' ख. २. 'अन्यथा' ख. ३. 'सा तु' क. ४. विक्रयार्हा ख.

तदमुना निष्कारणवैरिणा विहन्यमानो[1] मत्प्रयत्नः कथं शुभोदर्को भविष्यति । अथवा[2] त्रिलोकविजयिनो मन्मथस्य व्यवसितुं कथं नाम विघटयतु कुटिलधीरपि विधिः । भवतु । समयमन्विष्य योजयिष्यामीत्युक्त्वा तत्प्रभृति तया कृतो बहुविधोऽपि प्रयत्नो मदीयदुर्विधिपाकादेव[3] प्रतिहतः । ह्यस्तु पुनर्मन्दारारामे सा मे भगवत्या जटावत्याः प्रसादात्प्रियतमा मञ्जरी करतलल्लग्नेव[4] । किं ब्रूथः—'चिराय पलितं प्रियसखस्य मनोरथेन' इति । (सनिःश्वासम् ।) नहि नहि । किं तु फलोन्मुख एव भग्नः । वयस्यौ, किं ब्रूथः—'कथं कथम्' इति । (सविषादम् ।)

> कुञ्जे कोमलशाद्वले पदमिह द्रागर्पितं वा न वा
> किंचिच्चाटु चमत्कृतं च वचनं किं व्याहृतं वा न वा ।
> साकूतप्रणयं च सामि नयनं व्यापारितं वा न वा
> तन्व्या हन्त तदन्तरे विधिवशात्तस्याः प्रबुद्धः पतिः ॥ २२१ ॥

अद्यतनस्तु वृत्तान्तः प्रियवयस्ययोर्विदित एवास्ति । किं ब्रूथः—'भवतु । किमेतावता । अस्मिन्दिवसे फलिष्यत्येव ते मनोरथः' इति । (विहस्य ।) नन्वमद्यैव फलिष्यति, यस्मात्प्रियतमा पत्या समं प्रस्थिता । किं ब्रूथः[6]—'सखे, अपि नाम विस्मृतं वीतिहोत्रप्रेषितं पत्रम्' इति । (दिशो विलोक्य ।) विस्मृतप्रायमेव, यदयं प्रदोषसमयोऽप्युपनतः । तथा हि ।

> द्रागैन्द्रीमनुचुम्ब्य सस्मितमुखीमामोदिनीं पद्मिनीं
> कृत्वासौ परिरम्भसंभ्रमपरिश्रान्तां च वारश्रियम्[7] ।
> संरक्तोऽहिमभानुरद्य च समाश्लिष्यत्यहो[8] रागिणीं
> काश्मीरोपलसत्पयोधरभरां कान्तां दिशं वारुणीम् ॥ २२२ ॥

किं च ।

> पुराणरश्मिजालेषु स्रस्तेष्ववस्तावलम्बनम् ।
> बिम्बमम्बुरुहां नेतुरम्बरादवलम्बते ॥ २२३ ॥

---

१. 'निहन्यमानो' ख. २. 'अथवात्र' ख. ३. 'विपाकेनैव' ख. ४. 'लग्नैव' क.
५. 'भविष्यति' ख. ६. 'ब्रवीषि' क. ७. 'श्रियम्' क. ८. 'चरमां श्लिष्यत्यहो' क.

अपि च।

जगदिव बहुलातपाभितप्तं जनयितुमद्य जलाभिषेकशीतम्।

परिधृतरविशातकुम्भकुम्भा प्रचलति पश्चिमवारिधिं दिनश्रीः ॥ २२४ ॥

किं च।

पतति रविरपूर्ववारिराशौ हृदि पथिकस्य यथात्मभूर्हुताशः।

प्रसरति च तमां तमःप्ररोहः प्रतिपदमस्य यथा मनोविमोहः ॥ २२५ ॥

किं ब्रूथः—

'अभिभूय सतामवस्थितिं जडजेषु प्रतिपाद्य च श्रियम्।

जगतीपरितापकृत्कथं जलधौ नावपतेदसौ रविः ॥ २२६ ॥' इति।

(अन्यतोऽवलोक्य सकरुणम्।) हन्त हन्त।

चरमाचलपरभागं चक्षुर्जगतामगाद्यावत्।

हा तावदेव कोकौ दूनावन्योन्यमगमतां दूरम् ॥ २२७ ॥

(पुनर्विलोक्य।) कथमित एवागच्छति भगवती जटावती। (सप्रश्रयम्।) भगवति, इत इतः। (किंचिदुत्थाय।) भगवति, प्रणम्यसे। किं ब्रवीषि—'वत्स, अचिरादेवाभिमतं लभस्व' इति। (सनिर्वेदम्।) कथं ममाप्यभिमतलाभः। किं ब्रवीषि—'अद्यैवोपनतमित्यवधार्यताम्' इति। (सहर्षम्।) कथमिव। किं ब्रवीषि—'अर्धपथात्पुनरागता मञ्जरी' इति। वयस्यौ, किं ब्रूथः—'अहो सूनृतवादिता पुरोहितपुत्रस्य वीतिहोत्रस्य' इति। कथं नाम ज्योतिर्विदां वितथवादिता भवेत्। (सस्पृहं स्वगतम्।

अन्तर्मनोजदहनोष्णशिखावलीढ-
श्वासोपरोधपरिपाण्डुलसत्कपोलम्।
मद्वीक्षणक्षणभवन्नवकान्तिपूरं
द्रक्ष्यामि तद्वदनवारिरुहं कदा नु ॥ २२८ ॥

किं ब्रूथः—'भगवति, किं पत्यैव पुनरानीता' इति। भगवति, किं वदसि नहि नहीति। (सप्रमोदं स्वगतम्।) तर्हि कथमागता प्रियतमा। किं ब्रवीषि—'शृणु। यावदेवैनामादाय क्रोशमात्रं गतो माधवस्तावदेव तत्पित्रा मलयेन

१. 'चरमां' क. २. 'अद्य' क. ३. 'दूनां' क. ४. 'वत्स वत्स' क. ५. 'कथमिव कथमिव' क. ६. 'वयस्यौ' क-पुस्तके नास्ति. ७. 'कदाहं' ख. ८. 'ब्रवीषि' ख.

प्रेषितं पत्रमुपनतम्' इति । किमिति प्रेषितं पत्रम् । किं ब्रवीषि—'इदानीं [1]राजोपप्लवाद्रङ्गनगरं विहाय मधुरां गताः स्मः । तद्वत्सा मञ्जरी कतिचन मासांस्तत्रैव मातृभवने स्थातुमर्हति । [2]त्वं तावदेतत्पत्रिकावलोकनात्परं न क्षणमपि विलम्बितुमर्हसि' इति । वयस्यौ, किं ब्रूथः—'वयस्य, दिष्ट्या तव प्रसन्नाः कुलदेवताः' इति । (सौत्सुक्यम् ।) ततस्ततः । किं ब्रवीषि—'ततस्तां मञ्जरीं तत्सहोदरं स्व[3]च्छगुच्छं च पुनर्निवर्त्य तेन पत्रिकानेत्रा सद्वितीयः प्रस्थितो माधवः' इति । (सविस्मयानन्दम् ।)

हन्त पत्यपदेशेन मृत्युना हरिणेक्षणा ।
कला चान्द्रीव तमसा वियुक्ता सहसा कथम् ॥ २२९ ॥

क्वेदानीं प्रेयसी । किं ब्रवीषि—'भद्र, भवद्विरहविह्वलामध्वपरिश्रम-खिन्नां मन्यमानो मन्दारो मन्दिर एव मरालिकाद्वितीयां मञ्जरीमास्थाप्य सकलबन्धुकुलसमेतः कालिकामाराधयितुं बाह्योद्यानं गतः इति । अन्य-दप्यनुकूलं भगवत्याः प्रसादेन । क्षणमात्रं ध्यानारूढा भगवती कलहंस-[4]मयूरकौ प्रति किं वदति—'वत्सौ, युवयोरपि दिष्ट्या फलिष्यति मनोरथः । तदवश्यं व्याप्रियतामभिमतविषयेषु' इति । मयूरक, किं ब्रवीषि—'कलहंसकस्य कमलिनी करतलगतैव वर्तते । मम कथं मन्दभा-ग्यस्य प्रकृतिचपला सौदामिनी [5]प्रसीदेत्' इति । (पुनरपि ध्यात्वा ।) किं ब्रवीति भगवति—'मयूरक, पूर्वेद्युर्जाग्रतो गुरुजनाद्भीता सौदामिनी प्रति-निवृत्ता । न खल्वस्यामपि रजन्यां तथा करिष्यति' इति । वयस्यौ, किं ब्रूथः—'न खलु [6]ज्ञायते किं वा भविष्यति' इति । आः, कथं भग-वत्या वचनेऽपि विचिकित्सा । (श्रवणमभिनीय ।) कथं पदशब्द इव श्रूयते । (विलोक्य ।) कथं सत्वरं मरालिका समापतति । भगवति, किं ब्रवीषि—'भद्र, सांप्रतमसह्यवेदनया वत्सया प्रेषितेयं भविष्यति' इति । (पुनर्विलोक्य ।) कथं प्रत्यासन्नैव । किं ब्रवीषि—'कहं विलम्बीअदि ।

---

१. 'राजकार्यो' क. २. 'त्वं तावत्' इत्यादि 'अर्हसि' इत्यन्तं क-पुस्तके नास्ति. ३. 'स्वच्छं च' ऊ. ४. 'मरालकौ' ख. ५. 'प्रसीदतीति' ख. ६. 'विज्ञायते' ख.

महुरसविसलित्तंमग्गणेहिं कुसुमसरेण हेदाएँ हा सहीए ।
णिवइअ मॅलआणिलो हदासो हर हर जीविदसंसअं करेदि ॥२३०॥ (क)
(संस्कृतमाश्रित्य ।) किंबहुना ।

सेचं सेचं तुहिनसलिलैर्लोचने वीक्षिता सा
स्वादं स्वादं हिमकरघटे कां दशां ते वदामि ।
श्रोत्रे शश्वन्मलयजदलैः श्रूयतां वीजयित्वा
प्राणास्तन्व्यास्तव करतले तत्र देवः प्रमाणम् ॥२३१॥' इति ।

भगवति, किं ब्रवीषि—'त्वर्यताम् । यावदेव नोदयशिखरिशिखरमधिरोहति तुषारकरः' इति । एवमेतत् । तिमिरतिरोहित एव समये समुपसर्पणीयाः स्वैरिण्यः । (सर्वतोऽवलोक्य ।)

आपूरितमिदं श्यामतमसंतमसैरलम् ।
ब्रह्माण्डमण्डलं भाति सकज्जलकरण्डवत् ॥ २३२ ॥

कलहंसक, किं ब्रवीषि—
'सर्वे ध्वान्तमिदं वदन्तु बहुधा सिद्धान्त एवं तु नः
स्वाधारेषु करेषु पुष्करमणेः स्रस्तेषु नूनं शनैः ।
अस्तालम्बतयाम्बरेण पतता भ्रस्ते समस्ते जग-
त्युन्मीलत्करणकन्दलैरथ विधोस्तत्तावदुत्तार्यते ॥२३३॥' इति ।

वयस्य, सम्यगुक्तम् । मरालिके, किं ब्रवीषि—
'कंदप्पचन्दणसमीरणकोइलाली-
कोलाहलाउलमणा मह दाव आली ।

---

(क) कथं विलम्ब्यते ।
मधुरसविषलिप्तमार्गणैः कुसुमशरेण हताया हा सख्याः ।
निपत्य मलयानिलो हताशो हर हर जीवितसंशयं करोति ॥

---

१. 'सित्त' ख. २. 'हदाइ हा सही ई' क. ३. 'मअआणलो' क. ४. 'वीक्षते' ख. ५. 'हिमकरघटिः' ख. ६. 'त्वर्यतां त्वर्यताम्' ख. ७. 'आरोहति' ख. ८. 'समुपसर्पणीया स्वैरिणी' ख. ९. 'अपि' क. १०. 'सिक्त' ख. ११. 'हता हि हा सखी मे' क. १२. 'निपतति मदनानलो' क.

चन्दोदए जदि पदे घणचन्दिआ वि
णूणं[1] भवे अहह दावहदा लदे व्व ॥ २३४ ॥

ता तुवरिज्जदु' (क) इति । अये कलहंसक, मयूरक, युवाभ्यामपि भगवत्युपदेशक्रमेण व्याप्रियताम् । इयं भगवती मरालिका च मां त्वरयतः । किं ब्रूथः—'अथ किम् । वयस्य, साधय साधय' इति । मरालिके, मन्दारसदनमार्गं दर्शय । किं ब्रवीषि—'देव इदो इदो' (ख) इति । (कतिचित्[2]पदान्यतिक्रम्य ।) कथं क्षणेन मन्दारोद्यानमागतोऽस्मि । (विलोक्य सविस्मयम् ।) कथमिहानुदितेऽपि चन्द्रमसि चन्द्रिकाप्रसरः । मरालिके, किं ब्रवीषि—'ण क्खु चन्दिआपसारो एसो ।

देव[3] तुह दंसणादो तरुणीए हरिसणिब्भरङ्गीए ।
कन्दलइ मन्दहासो कन्दलिआणन्दकन्दलो व्व मुहात्[4] ॥ २३५ ॥

ता पेक्ख पेक्ख । इमाए
वाणी महुरसवेणी वेणी महुमत्तमहुअरीसेणी ।
खोणी विसालसोणी एणीणअणा वि मअणसरतूणी ॥२३६॥ (ग)

(क) कंदर्पचन्दनसमीरणकोकिलालि-
कोलाहलाकुलमना मम तावदालिः ।
चन्द्रोदये यदि पतेद्घनचन्द्रिकापि
नूनं भवेदहह दावहता लतेव ॥

त[6]त्त्वर्यताम् ।

(ख) देव, इत इतः ।

(ग) न खलु चन्द्रिकाप्रसर एषः ।
देव तव दर्शनात्तरुण्या हर्षनिर्भराङ्ग्याः ।
कन्दलति मन्दहासः कन्दलितानन्दकन्दल इव मुखात् ॥

त[7]त्पश्य पश्य । एतस्याः
वाणी मधुरसवेणी वेणी मधुमत्तमधुकरीश्रेणी ।
क्षोणी विशालश्रोणी एणीनयनापि मदनशरतूणी ॥

१. 'पूणं' क. २. 'कतिचन' ख. ३. इयमार्या क-पुस्तके गद्यान्तः पातिता. ४. 'मुहादो' ख. ५. 'मला' क. ६. 'त्वर्यतां' क. ७. 'तत्प्रेक्ष्य प्रेक्ष्य अस्याः' क.

भगवति, किं ब्रवीषि—'एवमेतत् ।

अमुष्या लावण्यं मृदुलमृदुलानप्यवयवा-
न्मनोलौल्यं धातुः[1] करकठिनतां मे विमृशति ।
पदं चित्ते धत्ते मतिरिति पुरा पङ्कजभुवा
ध्रुवं कल्याणीयं कलितसुकृतैरेव रचिता ॥ २३७ ॥

तदुपसर्पतु वत्सः[2]' इति । (उपसृत्य सचमत्कारम् ।)

प्रणये प्रतार्यमाणे[3] कृष्णभुजंगेन कोकदंपत्याः ।
चकित इव चित्रमेतत्पार्श्वे वर्तयति बर्हिणं[4] चन्द्रः ॥ २३८ ॥

किं[5] च ।

कुचदुर्गराजधान्योर्मध्येमार्गं मृगीदृशो मदनः ।
किमकृत नाभीवापीमपि रोमालीतमालवनरेखाम् ॥ २३९ ॥

मरालिके, लज्जया किंचिदिव संभ्रान्तां मञ्जरीं प्रति किं ब्रवीषि—

'ओणेहि सुमुहि दूलं वीलां विस्सासघाइणीं झत्ति ।
जा संमुहे वि दइए कितवा विमुहीकरेदि तुमम् ॥ २४० ॥' (क)

प्रिये, किं ब्रवीषि—'सहि, इमो माआवी महाभाओ जदा मह दिट्ठिपहं गतो तदो ज्जेव दूलं पलाइदं वीलाए अणुपअं ज्जेव कुलवुत्तेण अ' (ख) इति (सस्मितम् ।) मरालिके, किं ब्रवीषि—

'अणुवट्टिअ सेरगइं अम्बां अज्जं वि अणुसरिअ ।
सैरं चरमाणाए ण तुए लुत्तं सुवेणि कुलवुत्तम् ॥२४१॥' (ग) इति ।

---

(क) अपनय सुमुखि दूरं व्रीडां विश्वासघातिनीं झटिति ।
या संमुखेऽपि दयिते कितवा विमुखीकरोति त्वाम् ॥

(ख) सखि, अयं मायावी महाभागो यदा मम दृष्टिपथं गतस्तदैव दूरं पलायितं व्रीडयानुपदमेव कुलवृत्तेन च ।

(ग) अनुवर्त्य स्वैरगतिमम्बामार्यं चानुसृत्य ।
स्वैरं चरमाणाया न त्वया लुप्तं सुवेणि कुलवृत्तम् ॥

१. 'कठिनकरतां मे विमृशतः' ख. २. 'भवान्' ख. ३. 'प्रतीर्यमाणे' ख. ४. 'केकिनं' ख. ५. किं च' क-पुस्तके नास्ति.

प्रिये, मरालिकां कर्णोत्पलेन ताडयन्ती सस्मितं किं ब्रवीषि—'हला मरालिए, कहं अम्बं वि पिरिससि' (क) इति । भगवति, किं ब्रवीषि—'आ शतसंवत्सरान्तमस्त्येव कुलवृत्तम् । अयं तु दुर्लभः स्वाभिमतविषयानुभवः' इति । प्रिये, अपि नाम श्रुतो भगवतीनिदेशः । प्रिये, सस्मितं किं ब्रवीषि—'ण केवलं सुणीअदि अनुट्ठीअदि अ' (ख) इति । कथं भगवत्युपदेशेनाकलङ्कहृदया प्रेयसी संवृत्ता । भगवती किं ब्रवीषि—

'निसर्गाद्वेव युवयोर्निरूढप्रेमबन्धयोः ।
निशायितं मया जोषं कैरविण्यब्जयोरिव ॥ २४२ ॥' इति ।

प्रिये, किं ब्रवीषि—'पेक्ख पेक्ख । एदं कन्दसइ चन्दबिम्बम्' (ग) इति । अयि,

इन्दुना मम किमब्धिबिन्दुना सिन्धुना च पुनरस्य बन्धुना ।
आनने जयति ते वरानने चञ्चले च कलिते दृगञ्चले ॥ २४३ ॥

(प्राचीमवलोक्य ।) कथमुदितमेव विरहिजनप्राणजगत्प्राणफणिना हरशिरोमणिना । तथा हि ।

कलितमम्बरमाकलयन्करैर्मृदितपङ्कजकोशपयोधरः ।
विकसदुत्पलनेत्रविलोकितः सखि निशां सरसीकुरुते विधुः ॥ २४४ ॥

किं च ।

आलोक्य चन्द्रमसमभ्युदितं समन्ता-
दुद्वेलदूर्मिविचलत्कलशाम्बुराशेः ।
विष्वग्विसारिपरमाणुपरम्परैव
ज्योत्स्नात्मना जगदिदं धवलीकरोति ॥ २४५ ॥

(क) सखि मरालिके, कथमम्बामपि स्पृशसि ।
(ख) न केवलं श्रूयतेऽनुष्ठीयते च ।
(ग) प्रेक्षस्व प्रेक्षस्व । इदं कन्दलयति चन्द्रबिम्बम् ।

१. 'भगवति, किं ब्रवीषि' ख. २. 'विलसत्' ख.

भगवति, किं ब्रवीषि—'एवमेतत् ।

भास्वत्कर्कशशाणचक्रकषणैराकाशकालायसा-
यच्चूर्णं निबिडं निपत्य तम इत्याख्यां जगत्यामगात् ।
तेष्वेन्दुच्छलसिद्धपारदमहाबिन्दोः समायोगतो
जातं रूप्यरजोमयं वयमिदं ज्योत्स्नां समाचक्ष्महे ॥ २४६ ॥' इति ।

अहमेवं तर्कयामि ।

समयशबरो व्योमारण्ये सुधाशन मक्षिका-
नुविहितसुधाबिम्बक्षौद्रस्फुरत्पटलं प्रति ।
कलयति कलङ्काख्यं धूमं निपीड्य पुनश्च त-
त्किरति मधुरज्योत्स्नाक्षौद्रं महीतलभाजने ॥ २४७ ॥

अपि च ।

दष्टे जगद्वपुषि कालभुजंगमेन
तत्रान्धकारमिषमाविरभूद्विषं यत् ।
संजातलक्ष्मणि तदिन्दुमणौ निपाय्य
ज्योत्स्नामये पयसि तं क्षिपति स धाता ॥ २४८ ॥

अथवा ।

आयताग्रसितरश्मिनिबद्धं लाञ्छनछविमषीरसदिग्धम् ।
चन्द्रकैतवमरुत्पटचक्रं क्रीडयोत्सृजति किं स्मरबालः ॥ २४९ ॥

किं च ।

दिग्यन्त्रतस्तिमिरचूर्णविशेषपूर्णा-
दुद्गत्वरोडुमयरञ्जकविस्फुलिङ्गात् ।
कालेन पूर्वगिरिदुर्गजुषा प्रयुक्तो
वृत्तोपलो विधुमिषात्पथिकान्हिनस्ति ॥ २५० ॥

अथवा नायं चन्द्रः ।

शम्बराररिमृतं विषगर्भं चन्द्रबिम्बकपटात्प्रयुनक्ति ।
यद्बहिः सितमथासितमन्तः प्रोषितान्दहति दर्शनमात्रात् ॥ २५१ ॥

---

१. 'शोणकोणकषणैः' ख. २. 'यश्चेन्दोश्चल' क. ३. 'सुविहित' ख. ४. 'चन्द्रकाघनमषी' ख. ५. 'यत्रं' ख. ६. 'मयरम्बुक' ख.

प्रिये, किं ब्रवीषि—'सच्चं कहेइ महाभाओ । णिसग्गवैरी क्खु एसो विरहिजणस्स' (क) इति । मरालिके, किं ब्रवीषि—'कहं विअ सहावसीअलो संदावेइ चन्दमा' (ख) इति सत्यम् ।

नेत्रमग्निमयमङ्गजशत्रोः संप्रतार्य सुचिराश्रयणेन ।
दाहशक्तिमपहृत्य तदीयां चन्द्रमा दहति नूनमयुक्तान् ॥ २५२ ॥

(सविमर्शम् ।) हन्त, चिरादप्यनेन हताः स्मः । तदद्य प्रियासाहाय्यादसंजातभीतिरेनमुपालभे । (चन्द्रं प्रति ।)

खण्डशस्तव निकृन्तति कालो मण्डलं यदमृतस्य हिमांशो ।
अर्जितस्य हननात्पथिकानां पातकस्य सदृशः स हि दण्डः ॥ २५३ ॥

अथवा स्वचरितविलोकनेन दुर्मनायमानस्तवैव तातो नित्यमुपालभते । तथा हि ।

विप्रयोगिहननाय वृथा मे जातवानिति कथं जठरात्त्वम् ।
उद्यतोर्मिकरताडितमक्षाः क्रन्दति त्वदुदयेऽम्बुधिरिन्दो ॥ २५४ ॥

भगवति, किं ब्रवीषि —'मा मैवम् । लोकानुग्रहतत्पराः खलु चन्द्रमदनमलयानिलादयः । अतो नोपालम्भमर्हन्ति । यतः ।

कामानलेन मलयानिलबोधितेन
कारुः कलाद इव शीतकरः प्रताप्य ।
स्त्रीपुंसयोः प्रणयटङ्कणतो द्रवत्वं
नीत्वा मनःकनकमेकरसीकरोति ॥ २५५ ॥' इति ।

(सप्रश्रयम् ।) तर्हि प्रणमामि ।

स्फुरदिन्दीवरानन्दनाडिंधमकराङ्कुरम् ।
वृन्दारजीवजीवातुं वन्दे शिवशिरोमणिम् ॥ २५६ ॥

---

(क) सत्यं कथयति महाभागः । निसर्गवैरी खल्वेष विरहिजनस्य ।
(ख) कथमिव स्वभावशीतलः संतापयति चन्द्रमाः ।

---

१. 'मन्दानिला' ख. २. 'कामं' ख.

(श्रवणमभिनीय ।) चञ्चुपुटचञ्चच्चन्द्रिका मधुरविरावैश्चन्द्रादेशाच्चकोरिकाः[1] किं वदन्ति—

'मुकुन्द मञ्जरीमेतां मुदा त्वं शरदां शतम् ।
आनन्दय यथानन्दमिन्दुरिन्दीवरश्रियम् ॥ २५७ ॥' इति ।

भगवति, किं ब्रवीषि—'तथास्तु' इति । (सविनयम् ।) अनुगृहीतोऽस्मि । पुनः किं ब्रवीषि—'किं ते भूयः प्रियमुपकरोमि' इति । (सविनयम् ।) किमितोऽपि प्रियमस्ति । तथापीदमस्तु भरतवाक्यम् ।

वर्षन्तु कामं भुवि वारिवाहा गोब्राह्मणेभ्यः कुशलानि सन्तु ।
हृष्यन्तु सन्तः सुकविप्रबन्धैस्तेषां च शाम्यन्तु खलोपसर्गाः ॥ २५८ ॥

मुकुन्दानन्दनाम्ना मे भाणेनानेन तोषितः ।
कमलाकामुकः[2] कामं कल्लोलयतु मङ्गलम् ॥ २५९ ॥

कृतिं लसदलंकृतिं रसविदो बुधा ये मम
प्रसन्नहृदया दयाजलधयो बहूकुर्वते ।
तदीयपदपद्मयोरयमयं प्रणामाञ्जलिः
सरोजमुकुलाकृतिः शिरसि संततं न्यस्यते[3] ॥ २६० ॥

इति श्रीमत्काशीपतिकविराड्विरचितो मुकुन्दानन्दनामा भाणः संपूर्णः ।



१. 'चकोरा' ख. २. 'कमलैकमनाः' ख. ३. 'धार्यते' ख.

# काव्यमालामुद्रितग्रन्थाः ।



| | | मू. रु. | मा. व्य. |
|---|---|---|---|
| १. | **आर्यासप्तशती**—गोवर्धनाचार्यकृता, अनन्तपण्डितकृतया व्यङ्ग्यार्थदीपनया टीकया सहिता. ... ... ... ... | १॥ | ८= |
| २. | **श्रीकण्ठचरितकाव्यम्—श्रीमङ्खकविकृतम्, जोनराजकृतया** टीकया सहितम् । अस्य २५ सर्गाः सन्ति, अस्मिन् सज्जनदुर्जनलोकानां वर्णनं, वसन्तवर्णनं, कैलासपर्वतवर्णनम्, शिववर्णनं च इत्यादीनि वर्णनान्यतीव मनोरमाणि सन्ति.... | २॥ | ८=॥ |
| ३. | **कंसवधनाटकम्**—महाकविश्रीशेषकृष्णकृतम्. ... ... | ।॥। | ८- |
| ४. | **कर्णसुन्दरीनाटकम्**—महाकविश्रीबिह्लणकृतम्. ... ... | ।॥। | ८- |
| ५. | **धर्मशर्माभ्युदयकाव्यम्**—महाकवि **श्रीहरिचन्द्रविरचितम्**, अस्य २१ सर्गाः सन्ति, अस्मिन् धर्मनाथाभिधः कश्चिद्राजा नायकत्वेनाधिकृतः, अस्योत्पत्तिमारभ्यैवास्मिन् काव्ये सरसं वर्णनं दृश्यते. ... ... ... ... | १ | ८= |
| ६. | **समयमातृकाकाव्यम्**—महाकविश्रीक्षेमेन्द्रविरचितम्. ... | ।॥= | ८- |
| ७. | **कादम्बरीकथासारकाव्यम्**—श्रीमदभिनन्दकृतम्. ... | ।॥। | ८- |
| ८. | **रसगङ्गाधरः**—( अलंकारः ) महाकवि**श्रीजगन्नाथपण्डितरायविरचितः**, महामहोपाध्याय**नागेशभट्टकृतया** टीकया समेतः. ... ... ... ... ... ... | ३॥ | ८=॥ |
| ९. | **साम्बपञ्चाशिका**—साम्बकविप्रणीता, क्षेमराजकृतया टीकया सहिता. ... ... ... ... ... ... | ।। | ८॥ |
| १०. | **अमरुशतकम्**—श्रीअमरुककविविरचितं, अर्जुनवर्मदेवशर्मप्रणीतया रसिकसंजीविन्या टीकया सहितम्. ..., ... ... | ।॥= | ८- |
| ११. | **लटकमेलकप्रहसनम्**—श्रीशङ्खधरविरचितम्. ... ... | ।- | ८॥ |
| १२. | **हरविजयमहाकाव्यम्-राजानकरत्नाकरविरचितं, राजानकालककृत**टीकया सहितम्, पञ्चाशत् ५० सर्गात्मकेऽस्मिन् काव्ये भगवता श्रीशंकरेणान्धकासुरं निहत्य देवानां सुखमुदपादि इत्यादि कथानकं वर्तते, समयानुसारतोऽन्यदपि स्थलादिवर्णनं मनोहरतयाऽकारि ग्रन्थकृता. ... | ५ | ।॥। |

मू. रु. मा. व्य.

१३. **स्तुतिकुसुमाञ्जलिकाव्यम्**—श्रीजगद्धरभट्टविरचितं, राजानकरत्नकण्ठविरचितटीकया सहितं च. ... ... ... ... ३ ८≡

१४. **काव्यप्रदीपः**—(अलंकारग्रन्थः) **महामहोपाध्यायश्रीगोविन्दविरचितः**—तत्सदुपाख्यवैद्यनाथविरचितया टीकया सहितः ... ... ... ... ... ... ... ... २ ८≡

१५. **ध्वन्यालोकः**—(अलंकारः) **श्रीमदानन्दवर्धनाचार्यकृतः**—श्रीमदाचार्याभिनवगुप्तकृतटीकासहितः ... ... ... १॥ ८≡

१६. **दूताङ्गदनाटकम्**—**श्रीसुभटकविविरचितम्**, एकाङ्कात्मके स्वल्पतरेऽस्मिन्नाटके रावणपुरतोऽङ्गदकृतस्य दौत्यस्य सम्यक्तया रमणीयतया च विवेचनं कृतम्. ... ... ... ८≡ ८॥

१७. **भर्तृहरिनिर्वेदनाटकम्**—**श्रीहरिहरोपाध्यायकृतं**,पञ्चाङ्कात्मकमिदं नाटकमतीव रसभरितं विद्यते. अस्मिन् स्त्रीविरहिणो भर्तृहरेर्निर्वेदस्यातीव हृदयद्रावकतया वर्णनं कृतम्. ... ८=॥ ८॥

१८. **विष्णुभक्तिकल्पलताकाव्यम्**—पुरुषोत्तमविरचितं, महीधरविरचितया टीकया सहितम्. ... ... ... ... ... ... ॥= ८–॥

१९. **सहृदयानन्दकाव्यम्**—**कृष्णानन्दविरचितम्**, पञ्चदशसर्गात्मकमिदं काव्यं गीर्वाणगहनप्रविविक्षूणां मार्गसौलभ्यकरं सहृदयानां मनोरञ्जकं च विद्यते. ... ... ... ... ॥= ८–

२०. **श्रीनिवासविलासचम्पूः**—वेङ्कटेशकविप्रणीता, धरणीधरकृतटीकया सहिता. ... ... ... ... ... ... ... ॥।= ८–॥

२१. **वृत्तिवार्तिकम्**—श्रीमदप्पयदीक्षितप्रणीतम्. ... ... ... ८≡ ८॥

२२. **रससदनभाणम्**—युवराजकविविरचितम्. ... ... ... ॥ ८–

२३. **चित्रमीमांसा**—श्रीमदप्पयदीक्षितप्रणीता, **चित्रमीमांसाखण्डनम्**—पण्डितराजजगन्नाथविरचितम्. ... ... ॥।≡ ८–॥

**पांडुरंग जावजी,**
निर्णयसागर छापखान्याचे मालक,
घर नंबर २६–२८, कालबादेवी रोड, मुंबई.